# चतुर्द्दशसूक्तानि

## आचार्य्यगोविन्दकृतभाष्यभूषितानि

**संशोध्य सम्पादयिता**

डा. बन्नञ्जे गोविन्दाचार्यः

विद्यावाचस्पतिः, विद्यारत्नाकरः

पद्मश्रीपुरस्कृतः

**प्रकाशनम्**

श्रीऐतरेयशोधप्रकाशनपीठम्

भागवताश्रमः, भण्डारकेरि मठः

गिरिनगरम्, बेङ्गळूरु

२०१४

**CATURDAŚA- SŪKTĀNI :** fourteen vedic hymns, with Bhāṣya by Dr. Bannanje Govindācārya, Padmashri awardee, Vidyā-vācaspati, Vidyā-ratnākara,

Critically edited by : **Dr. Bannanje Govindācārya,**

Released on 17th may 2014 on the occassion of the birth centenary of **Shri Vidyamanya thirtha** and the 60th birthday of **Shri Vidyesha thirtha.**

Published by : Shri aithareyashodhapeetam
Bhagavatashrma, girinagara
Sri Bhandarakeri Maṭha
Bengaluru-560065
Tel. : 080-26721527, 26721068



First Edition : 2014, (Copies : 500)

Pages : 16+180

Price : ₹ 150

Cover design: **K.M. Sheshagiri**

Typeset : **Kaddi S. Badarinarayanachar**
Poornaprajna Vidyapeetha
E: bnkaddi@gmail.com

Printed at : **Sri Anirudh creations**
#144, 6th main, Gururaja Layout
Behind Vidyapeetha,Bengaluru-560028
Tel.: 9880077876
E:srikanth.nsil@gmail.com



कृष्णं वन्दे जगद्गुरुम्



**प्रणतवान् प्राणिनां प्राणभूतं**
**प्रणतिभिः प्रीणये पूर्णबोधम् ॥**

# आध्यक्षी भणितिः

सर्वे वेदाः स्वतन्त्रनारायणपरा इति 'नारायणपरा वेदाः', 'वासुदेवपरा वेदाः' इत्यादिभागवतवचनानि दृढमुद्घोषयन्ति । स्वयं भगवानपि तत्रैव 'मां विधत्तेऽभिधत्ते' इत्यादिवचनेनोद्धवं प्रति स्वस्य सर्ववेदार्थतां प्रदर्शितवान् । 'वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः । तावन्ति हरिनामानि पठितानि न संशयः' इति स्मार्तं वचः सर्ववेदाक्षराणि भगवतो गौणनामानि (गुण-प्रतिपादकनामानि) इति प्रतिपादयत् सर्ववैदिकवचनानि भगवद्गुणपरतया द्रष्टव्यानीति सूचयति ।

अत एव कृपालुर्मध्वमुनिर्वेदानां हार्दार्थदिग्दर्शनार्थमृग्भाष्यमुपनिषद्भाष्यं च प्रणिनाय । अध्यात्मपरतां वेदानां प्रदर्श्य, सनातनसम्प्रदायं पुनराविश्चकार ।

आचार्यमध्वो वेदव्याख्याने यन्मार्गमनुससार स मार्गोऽनुसरणीय इति तु 'महाजनो येन गतः स पन्थाः' इति भारतवचो बोधयति । अत्र महाजनशब्देन महाजीवो द्वात्रिंशल्लक्षणलक्षितमहादेहवान् वायुरपि विवक्षितः । जनशब्दस्य जीवदेहोभयपरत्वस्यापि दर्शनात् ।

तीर्थशोधी विद्यावाचस्पतिर्बन्नञ्जेगोविन्दाचार्यो घृतसूक्ताद्यश्लीलभाषण-सूक्तान्तचतुर्दशसूक्तकन्याः स्वव्याख्यानाभरणेन समलङ्कृत्य सादरं सूरिभ्यो वितीर्य कूकुदः संवृत्तः । सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूकुद इति कथ्यते । तमाचार्यगोविन्दं सप्रहर्षमभिनन्दामः ।

चतुर्दशसूक्तानामाचार्यगोविन्दप्रणीतं भाष्यं मध्वभाष्यप्रतिबिम्बत्वेन वेदार्थविचारणपराणां विदुषां मार्गदर्शनक्षमं सत् सूरिलाल्यं विराजते ।

तत्राऽद्यं घृतसूक्तमग्निसूर्यभगवद्वेदराशिपरतया बन्नञ्जेमहोदयेन हृदयङ्गमं व्याख्यातम्। तद्घृतसूक्तं मारुतपरतयाऽपि व्याख्यातुं शक्यम्। मारुतशब्दितस्य वायोर्माभी रुतत्वात्। पुरुषसूक्ताद्यतिरिक्तसर्ववैदिकसूक्तस्तुतत्वत इति यावत्। तथाचोक्तम्–'तथैव सर्वनामानि प्रवर्तन्ते च मारुते' इत्यैतरेयभाष्ये। तथाच वायुपरत्वमपि घृतसूक्तस्य शास्त्राभिमतम्। तदत्र किञ्चिद् वर्ण्यते।

घृतशब्दो ज्ञानद्युत्या सदादीप्तत्वान्मुख्यवायौ सूपपन्नः ।

'चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश' इति।

वृषभः= वृषेण शुद्धधर्मेण भातीति भागवतधर्मेण सदा शोभमानो मुख्य-वायुः । जीवश्रेष्ठत्वाच्च वृषभ इति पदं तत्र साधु सङ्गच्छते । तथाचोक्तम्– 'तृतीयमस्य वृषभस्य दोहसे' इति । तथाच, अस्य=मुख्यवायोः, चत्वारि शृङ्गाणि= धर्मज्ञानवैराग्यैश्वर्याणि मुख्यानि। त्रयो पादाः= अंशाः हनुमद्भीम-मध्वाख्याः । द्वे शीर्षे= ज्ञानबले शीर्षस्थानीये, मुख्ये इति यावत् । सप्त हस्तासः= ऋगादिसप्तविद्याः हस्तवत् स्वकार्यसाधन उपकारिका इति यावत् । मध्वरूपस्य वायोर्हरितत्वप्रतिपादनरूपस्वकार्ये ऋगादिसप्तविद्याः हस्तवत् साहाय्यमाचरन्तीति भावः । त्रिधा बद्धः= ज्ञानभक्ति-हरिप्रसादाशाभिर्बद्धः। तथाचोक्तम्–'ज्ञानभक्ती हरेस्तृप्तिं विना विष्णोरपि क्वचित् । नाऽकाङ्क्षचम्–' इति ।

एवंविधो वृषभाख्यो वायुः, ''महो=मह पूजायाम्, सर्वैरपि पूज्यः । देवः=दिवु क्रीडायाम्, सृष्ट्यादिक्रीडाविशिष्टो हरिः, मर्त्यान्= यथायोग्यं देहनाशदुःखप्राप्त्यपूर्णताख्यनानाविधविनाशनिमित्तैः मर्त्यशब्दितान् तृणजीवादिलक्ष्म्यन्तसर्वजीवान् आविवेश= नियमनार्थमनादितः प्रविष्टो वर्तत इति'' रोरवीति= दृढमुद्घोषयति, इति ।

✻ ✻ ✻



वाजसनेयसंहितायामश्लीलभाषणपरत्वेन प्रतीयमानामपि मन्त्रमालामाचार्य-गोविन्दो हृदयङ्गमं दशावतारलीलापरतया व्याख्याय स्वात्मानं वेदवाचस्पति-प्रशस्तिपात्रतां निनाय । तत्रोपक्रमे 'यः स्त्रीणां जीवभोजनः' इति भगवत एव प्रस्तावो वर्तते। अत्र स्त्रीपदेन वेदाभिमानिन्यो शच्यादिदेवतास्त्रियो गृह्यन्ते। 'पुमान् रेतः सिञ्चति योषितायाम्' इत्यत्र यथा योषित्पदेन रमादेवी गृह्यते, तथेति ज्ञेयम् । वेदाभिमानिन्यो शच्यादिदेवतास्त्रियः स्वपति-तदन्तर्गतभगवद्गुणकीर्तनेन मोक्षे जीवभोजं= जीवात्मस्वरूपभूतं भोजन-शब्दितमानन्दं भगवत्प्रसादेन भुञ्जते । एवञ्च, जीवात्मस्वरूपानन्दमेव जीवभोजशब्देन गृह्यते । तं नयति= प्रापयतीति जीवभोजन इति नित्यानन्दभोजनदायी भगवान् कीर्तितः। एवञ्च, उपक्रमे भगवत्प्रस्तावादत्र सूक्ते भगवान् प्रतिपाद्यते, न तु कैवल्यपरिपन्थ्यश्लीलभाषणम् ।

उपसंहारे च भगवत एव कीर्तनं वर्तते । तत्र मन्त्रद्वयं किञ्चित् वर्ण्यते–

'यद्धरिणो यवमत्ति न पुष्टं पशु मन्यते।
शूद्रा यदर्यजारा न पोषाय धनायति॥'

हरिणः= तत्तद्योग्यसाधनानुसारेण त्रिविधान् जीवान् तत्तद्योग्यां गतिं हरति नयतीति हरिणो भगवान् नारायणः । 'पुण्येन पुण्यं पापेन पापम्' इत्युक्तेः । यवं= यववत् स्वयोग्यसाधनापेक्षयाऽल्पम्, साधनापूर्तिमन्तं जीवमिति यावत्, अत्ति= इह संसारे विनाशयति । पौनःपुन्येनोत्पाद्य विनाशयति, आवर्तयति संसारे इति यावत्। किञ्च, पुष्टं= स्वयोग्यतापेक्षयाऽ-धिकपुण्येन पुष्टं नरं न पशु मन्यते= 'स यदि पितृलोककामः सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्याद्युक्तमुक्त-कालीनस्वयोग्यसर्वदर्शनवन्तं न मन्यते, मुक्तत्वेन नाङ्गीकरोतीति यावत् । एधमानद्विट्त्वादिति भावः ।

अथवा हरिम्=भागवतसूर्यं नयतीति हरिणो=भगवान् व्यासः । शूद्राः= वेदार्थविवरणेऽयोग्याः पाशुपतादिस्मृतयः, अर्यजारा=स्वामिनं नारायणं

महार्थभूतं जरयन्ति श्लथयन्ति तदर्थापह्नवं कुर्वन्ति । तासां नपोषाय= निरासायैव धनायति= इच्छति। अत एव समयपादे नानास्मृतीनां निरासस्तेन कृतः ।

अथवा, शूद्रा वेदानधिकारित्रिपुरासुरपत्न्यः। त्रिपुरासुराणां वेदानधिकारित्वं तु प्रसिद्धमेव । तत्स्वरूपाणां जिनादिदैत्यानामौपधर्म्योपदेशेन बुद्धरूपेण भगवता वेदमार्गात् प्रच्यावितत्वात्। ताः शूद्रा यदर्यजारा भवन्ति स्वामिनो भगवतो बुद्धस्य जारा भोग्यत्वकामनादिना स्वैरिणीवदाचरन्ति, अत एव नपोषाय= तत्पतीनां विनाशायैव धनायति= इच्छति, पातिव्रत्यभङ्गादिति भावः। तासां वा नपोषाय= वैधव्यनिमित्तदुःखाख्यविनाशायैव धनायति= इच्छतीत्यर्थः ।

'यद्धरिणो यवमत्ति न पुष्टं बहु मन्यते।
शूद्रो यदर्यायै जारो न पोषमनुमन्यते॥'

हरिणो=यज्ञे सारहरणशीलो भगवान् व्रीह्यभावे तत्प्रतिनिधित्वेन विहितं यवमपि अत्ति= स्वीकरोति । अथवा, अर्थकृशेन भक्तेन दत्तं यवमपि= अल्पजलादिकमपि, अनुग्रहार्थम् अत्ति= स्वीकरोति । 'पत्रं पुष्पं फलं तोयम् ' इत्याद्युक्तेः । 'अल्पमप्याहृतं भक्तैः प्रेम्णा भूर्येव मे भवेत्' इत्युक्तेश्च। अभक्तानां पुष्टमपि=राजभोगादिना पुष्टमपि मानं (पूजां) न बहु मन्यते= न साधु मन्यते, न स्वीकरोति दुर्योधनस्य मानमिव। 'भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते' इत्युक्तेः ।

शूद्रः=वेदानधिकारी चरणतळेषु जातः कश्चन, अर्यायै=आदेशकारिण्याः स्वामिन्याः श्रुतेः जारो= गुणपूर्णभगवद्रूपार्थं (वेदात्) जरयति श्लथयति तदर्थापह्नवं करोति। तस्य पोषं तत्सिद्धान्तपोषं नानुमन्यते। तस्य नपोषाय= तत्सिद्धान्तनिरासायैवानुमन्यते । तदर्थं स्वप्रेष्ठशिष्यं मध्वमुनिं 'कुरु सूत्रभाष्यमविलम्बितम्' इत्यादेशेन प्रेषयतीति भावः ।



एवमुपसंहारे च भगवत्परत्वेनेदं सूक्तं द्रष्टुं शक्यत्वेन तुच्छार्थपरतया दर्शनं वैदिकानां न शोभते ।

तमिमं चतुर्दशसूक्तसमूहं मध्वकृपासुधाभिषिक्तेन विद्याकुशलेनाऽचार्यगोविन्देन मध्वभाष्यप्रतिबिम्बभाष्याभरणेन विभूषितं विधाय महती व्यासमध्ववाङ्मयसेवा समर्पिता । गुरूणां प्रातःस्मरणीयानां श्रीमद्विद्यामान्यतीर्थश्रीमच्चरणानां जन्मशतमानोत्सवशुभावसरे महदुपायनं सूरिसङ्घाय समाहृतम्। एतदुपायन-समर्पणेन मध्वान्तर्गतव्यासाभिन्नास्मदुपास्यो जानकीजानिः करुणामृतवृष्ट्या वेदवाचस्पतिमाचार्यगोविन्दं पुष्णात्वित्याशास्महे । एतद्व्याख्यानोपादानेन जिज्ञासुवर्गो गोविन्दाचार्यस्य परिश्रमं सफलतां नयतु ।

एतद्ग्रन्थप्रकाशने स्वीकृतपरिश्रमं पर्कळ वेङ्कटेशबायरिमहोदयं कृष्णराजभट्टं कड्डीबदरीनारायणाचार्यम्, चित्रकलाभिज्ञं के. एम्, शेषगिरिनामधेयम्, श्रीनिधिवासिष्ठम्, तथा विहितमुद्रणकार्यं कल्याणीश्रीकान्तं च श्रेयःप्रार्थनापूर्वमभिनन्दामः ।

इति शम्

**श्रीविद्येशतीर्थश्रीपादाः**
**अध्यक्षाः**
**श्रीऐतरेयशोधप्रकाशनपीठम्**
**भागवताश्रमः, भण्डारकेरिमठः**
**गिरिनगरम्, बेङ्गळूरु**

**जय-वैशाख-शुक्ल पौर्णिमा**
**१४-५-२०१४**

# किञ्चित् पूर्वं निवेदनीयम्

अत्र चतुर्दश सूक्तानि भवन्ति। प्रायस्तानि कानिचिद् विश्वगुरोराचार्यमध्वस्य ग्रन्थेषूल्लिखितानि तेनाऽविष्कृतार्थानि । तदीयचरितवर्णनपरे श्रीमध्वविजये समुल्लिखितानि च कानिचित्। अपूर्वाणीमानि सूक्तरत्नानीदमुपक्रमं सभाष्याणि प्रकटीक्रियन्त इति महदिदं प्रमोदस्थानम् ।

नासत्यसूक्तं पुनर्मध्वनाम्नैव नवकृत्वः प्राणतत्वं स्तौति–हे प्राण, मध्वस्त्वं नः सोमाख्यस्य भक्तिरसस्य पानायाऽयाहीति–‘मध्वः सोमस्य पीतये’ । अपूर्वमिदं गुह्यभाषामयं गुरुस्तवनमिति तदप्यत्र न्यवेश्यत ।

यानि च शाखान्तरेष्वपि पठितानि ओषधिसूक्तादीनि तेषां शाखान्तरगतः पाठोऽप्यत्र सङ्गृह्य दर्शितः। तेषामर्थभेदश्च विवृतः। ओषधिसूक्तं बाह्वृच्येऽपि पठ्यते। तैत्तिरीयसंहितायामपि। काण्वसंहितायामपि। माध्यन्दिनसंहिता-यामपि। तत्र च न्यूनाधिका ऋचो भवन्ति। चतुर्विधोऽपि पाठभेदोऽत्र सार्थो निरूपितः । एवमन्यत्रापि।

एवमृग्वेदखिले, अथर्ववेदे च पठितस्य कुन्तापसूक्तस्यापूर्वमर्थमाविश्चकार भगवत्पादः प्रथमम्, ‘उजिरे’ इति सम्प्रति प्रथिते ग्रामे ‘वयमेव याज्ञिकाः’ इति दुर्मतान्धानां पण्डितमण्डूकानां कृते। तस्यापि किञ्चिदिवार्थाविष्करणमत्रापि भगवत्पादकृपया कृतमस्माभिः ।



याज्ञिकानां सम्प्रदाये ‘अश्लीलभाषणम्’ इति प्रथितमपरं सूक्तं वाजसनेये पठ्यते । ‘सर्वे वेदा यत् पदमामनन्ति’ इति श्रुतिरेवाऽत्महृदयमाविश्चकार । अथाप्यश्लीलमेवार्थं वर्णयन्तो याज्ञिकाः कथं वैदिकाः स्युः? नूनं वैदिकम्मन्या एव ते । अतोऽस्य मन्त्रग्रामस्य भगवत्परताऽवश्यं वर्णनीयाऽसीत् ।

तत्र पूर्वं भगवत्प्रार्थना पठ्यते– ‘गणानां त्वा गणपतिं हवामहे–’ इति । सूक्तान्ते च–‘दधिक्राव्णः–’ इति भगवदभिषेकमन्त्रः। मध्यपतिता दश कण्डिका अश्लीलमन्त्रा इति याज्ञिकाः। पूर्वोत्तरपर्यालोचनया दशापि मन्त्रा दशरूपिणं परमात्मानमभिष्टुवन्तीति स्फुटं तत्ववादिनाम्। सेयं वेदेषु गुह्यभाषा यन्मुखतो भगवचना अपि मन्त्रा अन्ततो भगवद्वचना इति । तदुक्तम्–‘भाषात्रयं न जानाति रीतीनां शतमेव च। व्यत्यासादीन् सप्त भेदान् वेदाद्यर्थं तु यो वदेत् । स याति नरकं घोरं नात्र कार्या विचारणा’ इति ।

यदि विहिताध्वराणामपि अधीताम्नायानामपि अश्लीलार्थानुसन्धानेन निरय एव शरणं तर्हि वरमनध्ययनं वेदानाम्। अतो यथार्थानुसन्धानमेवाध्ययनस्याध्वराणां च पुण्यसाधनत्वहेतुः । तस्मात् तेषामध्यात्मपरता किञ्चिदिवात्र दर्शिता ।

अन्ते च विनेयानां व्युत्पत्तिसौकर्याय ओषधिसूक्ते ‘ओषधयः सं वदन्ते’ (ऋ.सं.१०.९७.२२) इति मन्त्रस्य घनान्ता अष्टौ विकृतयः प्रदर्शिताः । एवमपालासूक्ते माध्यन्दिनानां विशिष्टो घनपाठक्रमोऽपि द्वितीयमन्त्रस्य चरमचरणद्वये सम्प्रदायागतो दृश्यते । सोऽप्यत्रान्ते संयोजितः ।

**भण्डारकेरिमठस्य सुवर्णेतिहासः**

आसीत् स तादृशः कालः, यदा ‘कासरगोडु’ इति प्रथितो देशभागः (तदात्वे ‘कबेनाडु’ इति व्यवह्रियमाणः) तौळवानां राजधानी भूत्वा विरराज, ‘बारकूरु’ इति प्रथितो देशभागः (तदात्वे ‘बारहकन्थापुरम्’ इति विदितः) उत्तरकर्णाटानां

राजधानीभूय । तत्र ‘भण्डारकेरि’ इति प्रथितो देशभागो राजगुरूणां यतिवरेण्यानामावासस्थानमास, यत्र राजभवनस्य कोशागारं च बभूव। आन्तरं वित्तं गुरवो ररक्षुः । बाह्यं वित्तं राजानः ।

शरदां सप्तशतेभ्यः पूर्वं तत्र मठेऽच्युतप्रज्ञनामा यतिपुङ्गव उवास । स स्वयं मायावादं बोधयन्नपि, अन्ततस्तत्ववादे बद्धश्रद्ध आस, अथापि लोके सर्वतः प्रसृतं मायावादं निराकर्तुमप्रभवन्, प्रीत्या स्वीकर्तुमप्यप्रभवन् ।

‘अयि भगवन्, दर्शय मे सात्विकं पन्थानम्’ इति स्वाराध्यं दैवतं निरन्तरमर्थयमानो बभूव ।

बारकूरुनगरे स्वमूलमठे सत्यपि स यतिराट् सन्निहितानन्तशयनचन्द्रमौळीश्वराभ्यां पूर्वपश्चिमदिगालयाभ्यां तौळवानां महिते पुण्यक्षेत्रे बहुलमुवास । तत्रैव च विशिष्य पाठप्रवचनं प्रचचाल ।

वयसा ततोऽपि ज्यायान् अत एव ज्येष्ठयतिरिति प्रसिद्धो वृद्धो लिकुचान्वयजो यतिरन्योऽपि तेन सहैवोवास । तथाऽच्युतप्रज्ञस्योत्तराधिकारी सत्यतीर्थश्च ।

‘चेर्काडि’ग्राम उपलब्धशिलाशासनानुसारेण तदानीमीश्वरदेवादयः शासनाधिकृता आसन् । मरडित्तायादयः पुराध्यक्षपुरतो बलीवर्दवालधिकल्पा अनल्पगर्वाः स्वीकृतपौरोहित्यवृत्तयो कर्मकाण्डविषये राजगुरवो बभूवुः ।

तदैवाऽचार्यमध्वः पुरुषोत्तमतीर्थापरनामानमच्युतप्रज्ञमुनिं तुरीयाश्रमस्वीकाराय गुरुत्वेन वरयामास । तत एव चायं मठो यशःपर्वतस्योत्तुङ्गं शिखरमारुरोह । बारकूरुराजधानी महेन्द्रसदनोपमा विरेजे ।

मुनिरच्युतप्रज्ञः सात्विकपथदर्शनार्थं स्वेष्टदैवमयाचिष्ट किल । तस्य फलमिदं यन्मध्वस्तच्छिष्यो बभूव । आश्रमगुरोरुद्धरणार्थं लोकगुरोर्विडम्बनमिदम् । तेनाहो सनकादिभिरारब्धा कर्मन्दिपरम्पराऽपि परिशुद्धा बभूव। प्राणः पूर्णप्रज्ञो बभूव। श्रीमताऽच्युतप्रज्ञमुनिना सानन्दं वेदान्तसाम्राज्येऽभिषिक्त आनन्दतीर्थो



बभूव। मन्त्रवर्णैरभिहितनामा स्वयं मध्वो बभूव, दशप्रमतिर्बभूव–‘दशप्रमतिं जनयन्त योषणः’ इति, ‘मध्व आधवे गुहा सन्तं मातरिश्वा मथायति’ इति।

अथ च भगवत्पाद आनन्दतीर्थः स्वयमेव कालबलेन विस्मृतप्रायं वैदिकं तत्ववादं प्रसारयामास । रजतपीठपुरं तत्ववादस्य केन्द्रस्थानमास । ततः कालक्रमेण बारकूरुराजधानीवैभवं तिरोबभूव। दुर्मदान्धा भूपतयोऽप्यस्तङ्गताः। मठीयं च वैभवं कालगर्भे न्यलीयत । एवं शरदां षडतीतानि शतानि ।

पुनः कालचक्रं पर्यवर्तत। अधोगता चक्रारपङ्क्तिरुपरि समारुरोह। भण्डारकेरिमठे पुनश्च समृद्धिमयः कालः सम्बभूव । भगवती वाग्देवता तुष्टा चक्षुषी उन्मील्य कृपारसं प्रसारयामास। अहो वेदान्तविद्यापरिरक्षणाय श्रीविद्यामान्यतीर्थाभिधः स्वयं मूर्तिमानिव तत्ववादः श्रीसत्यतीर्थपीठमलश्चकार। तत्ववादविजयसिंहनादः भित्तिष्वपि प्रतिदध्वान । प्रत्यहं पाठप्रवचनैः विदुषां वादकथाभिश्च सम्बभ्राम विद्वद्ग्रामः भण्डारकेरिमठे। मठीयस्तटाकोऽपि वेदनादतरङ्गैरालिङ्गितः पूततरो बभूव ।

अथ पुनः कालः परिववृते । वेदान्तविद्यासम्राट् श्रीविद्यामान्यतीर्थश्रीचरणः श्रीहृषीकेशतीर्थसंस्थानमधिष्ठाय रजतपीठपुरमलश्चकार । भगवान् मन्थपाशपाणिस्तं स्वपूजार्थमाजुहाव । किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने । पुनरथ भण्डारकेरिमठः किमपि मौनमुवाह ।

यतिराजमणिः श्रीविद्यामान्यतीर्थः श्रीकृष्णपूजापर्यायं निरुह्य नितरां निष्पादितभगवत्प्रसादः पाठप्रवचनसमेधितासङ्ख्यच्छात्रसमुदायस्तान्यसङ्ख्यानि छात्रवृन्दानि दुःखजलधौ निक्षिप्य हरिचरणमाप, स्वीयं च वेदान्तविद्यानिजराज्यपालनधुरां स्वशिष्याग्रण्योर्यतिपुङ्गवयोः श्रीविद्याधीशतीर्थस्य श्रीविद्येशतीर्थस्य च स्कन्धे निधाय । विशिष्य च स्वप्रथमशिष्यप्रवरस्य श्रीपेजावरमठाधीशस्य श्रीविश्वेशतीर्थस्य स्कन्धे ।

### शतमानोत्सवः

सम्प्रति श्रीविद्यामान्यतीर्थश्रीचरणस्य जन्मशतमानोत्सवः तत्परम्पराया उत्तराधिकारिणः शिष्यप्रवरस्य श्रीविद्येशतीर्थश्रीचरणस्य षष्टोऽब्दमहोत्सवश्च सहैव सम्भवत इति महान् नः सम्भ्रमः । हेम्नः परमामोदोऽयम् ।

अस्मिन्नुत्सवसम्मर्दावसरे श्रीविद्यामान्यतीर्थगुरोः प्रियतमं सूक्तसमुदयभाष्यं प्रकाश्यते श्रीविद्येशतीर्थश्रीचरणेनेति न पारयामोऽन्तः सम्भृतमानन्दभरं पदैरभिव्यङ्क्तुम् ।

तं च ग्रन्थरचनभारं निर्वोढुं श्रीविद्येशतीर्थश्रीपादः कृपया मामाजिज्ञपत् । श्रीविद्यामान्यतीर्थान्तेवासित्वमावयोः साधर्म्यम् । तन्मूलमिदं मे भागधेयम् । तदर्थमियं मे भगवच्चरणयोः भगवत्पादचरणयोः श्रीविद्येशतीर्थचरणयोश्च प्रणामपरम्परा । 'भूयिष्ठां ते नमउक्तिं विधेम' इति ।

यः पुनरस्य मुद्रणार्थमक्षराणि गणकयन्त्रेण संयोजयामास तं श्रीमन्तं कड्डीपदोपाह्वं बदरीनारायणाचार्यम्, ये पुनरक्षरदोषान् समशोधयन्, तानपि श्रीमतः पर्कळ वेङ्कटेशबायरि-कृष्णराजभट्टप्रमुखान् सहार्दमभिनन्दामः ।

यः पुनरस्य मुखपत्रविन्यासेन पुस्तकस्य सुषमां पुपोष तस्मै चित्रकलाविशारदाय श्रीमते के. एम्. शेषगिरिपदाह्वाय भूयस्य आशिषः । सुन्दरं सपदि च मुद्रितवतः श्रीमतः श्रीकान्तस्य उपकारं कथं विस्मरामः । अभिनन्दनीयोऽयं गुरुसेवाधुरन्दरः ।

रजतपीठम् — भवदीयः–

**जय-वैशाख-शुक्ल-नवमी** — **डा. बन्नञ्जे गोविन्दाचार्यः**

(८.५.२०१४)

# विषयानुक्रमणिका



अहो महो दिवः पन्नमाहो मूर्त्ता हरेः कृपा ।
दुर्वादिदैत्यदम्भोलिर्विद्यामान्योऽभवद् भुवि ॥

ॐ ॥ **घृतमिव पयसि निषक्तं भूतेभूते च लसितमतिगूढम् ।**
**प्राणाग्नेः प्रियदैवं भक्त्या प्रणतोऽस्मि नारयणम्**[१] **॥ ❋ ॥**

**अध्यात्ममतिगुह्यार्थं दुर्बोधं विदुषामपि ।**
**प्रकाशयेतामन्तस्थौ प्राणनारायणौ स्वयम् ॥ ❋ ॥**

अथातो गुह्यं घृतसूक्तं व्याख्यास्यामः ।

चतुर्थमण्डलेऽष्टपञ्चाशमेकादशर्चं द्विवर्गं चरमं सूक्तम् । अन्त्या जगती । शिष्टास्त्रिष्टुभः । वामदेव ऋषिः । घृतनामाऽग्निनारायणो देवता । 'समुद्रादूर्मिरेकादश आग्नेयम्, जगत्यन्तम्, सौर्यं वा, आपं वा, गव्यं वा, घृतस्तुतिर्वा' इत्यनुक्रमणिका ।

## हरिः ओ३म् ॥

**समुद्रादूर्म्मिर्म्मधुमाँउदारदुपांशुनासममृतत्वमानट् ।**
**घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः ॥ १ ॥**

**समुद्रात् । ऊर्म्मिः । मधु+मान् । उत् । आरत् । उप । अंशुना । सम् ।**
**अमृत+त्वम् । आनट् ॥ घृतस्य । नाम । गुह्यम् । यत् । अस्ति । जिह्वा ।**
**देवानाम् । अमृतस्य । नाभिः ॥ १ ॥**

वेदजलधेः भगवद्गुणोर्मिर्मधुरः समुद्गतः गौणानां नाम्नां वोर्मिः । उपांशुना गुह्येन येन, यस्य उत्कृष्टेनैकेनांशेन वा उपासितेन साधकः अमृतत्वं आनट् समश्नुते । किं गुह्यम्? घृतस्य दीप्तस्य पवित्रस्य च भगवतो यद् गुह्यं नाम तदिदं देवानां

१. नारस्य सात्विकजीवगणस्य यणौ ज्ञानानन्दौ येन स नारयणः । **'येति ज्ञानं समुद्दिष्टम्'** इति, **'णश्च निर्वृतिवाचकः'** इति च स्मरन्ति ।



जिह्वा आह्वानम् । देवानामाह्वानमेव घृतस्य गुह्यं नाम । तेषु गूढो भगवानेव हि । 'यो देवानां नामधा एक एव' इति हि श्रूयते । अमृतस्य नाभिराश्रयः । मुक्तानां परमा गतिरित्येतत् ॥

समुद्रात् प्रज्वलिताग्नेः मधुमान् घृतधूमोर्मिरुदगच्छत् सूर्यं प्रति । अकामनया हुतेन यस्योत्कृष्टांशेनामृतत्वमाप । कर्मणा ज्ञानमातनोतीत्यादेः । घृतस्य दीप्तस्याग्नेर्गुह्यं नाम देवानां जिह्वेति अमृतस्य नाभिरिति ।

समुद्रिक्तदीप्तेरित्यादित्यात् वृष्टजलोर्मिर्मधुमानुदारत् । अंशुसन्निहितेन नारायणेनांशिना गायत्र्योपासितेनामृतत्वमाप । जनाश्च वृष्टिजलेन जीवन्तो जीवनवन्तो बभूवुः । घृतस्याऽदित्यस्य नाम । देवानां जिह्वेत्यादि । देवेभ्यो दत्तमादित्यं किलोपतिष्ठते ।

समुद्रिक्ताद् वृष्ट्युदकादूर्मिरुदारत् । जनश्च तेन अजीवत् । ततश्च समुद्राद्गवामूधसः क्षीरोर्मिरुदारत् । समुद्राद् भगवतः ज्ञानरसोर्मिरुदारत् । समुद्राद् वायोर्वा गुणोर्मिः । गुहा सन्तं मातरिश्वा हि मथायति । तृतीयचरणे 'गृहियम्' इति क्षैप्रव्यूहेन छन्दःपूर्तिः ॥ १ ॥

**वयन्नामप्रब्रवामाघृतस्यास्मिन्यज्ञेधारयामानमोभिः ।**
**उपब्रह्माशृणवच्छस्यमानञ्चतुश्शृङ्गोवमीद्गौरऽएतत् ॥ २ ॥**

**वयम् । नाम । प्र । ब्रवाम । घृतस्य । अस्मिन् । यज्ञे । धारयाम ।**
**नमः+भिः ॥ उप । ब्रह्मा । शृणवत् । शस्यमानम् । चतुः+शृङ्गः । अवमीत् ।**
**गौरः । एतत् ॥ २ ॥**

अस्मिन् यज्ञे मानसे तदेव घृतस्य भगवतो नाम नमोभिः सह धारयाम । विश्वाय नमः विष्णवे नम इत्यादि । अस्माभिः उपसद्य शस्यमानं नाम परं ब्रह्म नारायणाख्यं शृणोति । योऽसौ गौरः नित्यशुद्धः चतुर्वेदवेद्यः एतत् नाम रूपं च स्वयमवमीत् । स्वोदरादुद्गिरति स्म । अथच शस्यमानं नाम ब्रह्मा वेदराशिरुपशृणोतु । एवं मन्त्रदेवता प्रार्थ्यते । अपौरुषेयतया स्वतः गौरः शुद्धः चतुःशृङ्गः वेदचतुष्टयात्मा

ब्रह्मा एतद् घृतं ब्रह्मतत्वमवमीत् उद्गिरतु स्वयं ज्ञापयत्विति । अत्र 'घृतस्य+अस्मिन् यज्ञे' इति पादयोर्विश्लेषेण, 'चतुःशृङ्गो+अवमीत्' इति स्वरयोर्विश्लेषेण च छन्दःपूर्तिः ॥ २ ॥

**चत्वारिशृङ्गात्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तासोऽअस्य ।**
**त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँआविवेश ॥ ३ ॥**

**चत्वारि । शृङ्गा । त्रयः । अस्य । पादाः । द्वेइति । शीर्षेइति । सप्त । हस्तासः । अस्य ॥ त्रिधा । बद्धः । वृषभः । रोरवीति । महः । देवः । मर्त्यान् । आ । विवेश ॥ ३ ॥**

अस्याग्नेः चत्वारि शृङ्गाणि चत्वारो वेदाः । त्रीणि सवनानि त्रयः पादाः । द्वे शीर्षे ऐहिकमामुष्मिकं च । सप्त सोमसंस्थाः सप्त च्छदांसि वा हस्ताः । कास्ताः सप्त सोमसंस्थाः ? अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोळशी, वाजपेयः, अतिरात्रः, आप्तोर्याम इति । मन्त्रेषु ब्राह्मणेषु कल्पसूत्रेषु च बद्धः । वृषभोऽभीष्टवर्षकः । ऋत्विक्षु गतः स्वयं रोरवीति ॥

अथ सूर्यः । चतस्रो दिशश्चत्वारि शृङ्गाणि । त्रिभिर्वेदैस्त्रिषवणं यातीति वेदाः पादाः । वृष्टिः शीतं घर्म इति वा त्रयः पादाः । द्वे शीर्षे अहश्च रात्रिश्च । अयनद्वयं वा । सप्तवर्णा रश्मयः सप्त वासरा वा हस्ताः । भूतं भवद् भविष्यदिति, भूर्भुवः सुवरिति वा त्रिधा बद्धः । वृषभो वर्षणात् ।

नारायणस्य वासुदेवादयः विश्वादयो वा चत्वारि शृङ्गाणि । त्रयः पादा जाग्रत्स्वप्नसुषुप्तयः । सृष्टिस्थितिसंहाराः । अथ चत्वारो वेदा चत्वारि शृङ्गाणि । त्रयः अकारोकारमकाराः पादाः । व्याहृतित्रयम्, त्रिपदा गायत्री, वर्गत्रयात्मकं पुरुषसूक्तं चेति वा । द्वे शीर्षे पौरुषेयापौरुषेयवेदभेदेन । सप्त मातरः विद्याश्छन्दांसि वा हस्ताः । त्रिषु लोकेषु, त्रिष्ववस्थासु, ज्ञानभक्तिवैराग्यैश्च बद्धः ।

अथच चत्वारि शृङ्गाणि चत्वारो वेदाः । शृङ्गग्राहिकया गवादिकमिव भगवन्त-मिमे ग्राहयन्तीति । त्रयो अस्य पादाः स्वरूपभूताः, 'त्रिपादस्यामृतं दिवि' इति



कथिताः । 'अमृतं क्षेममभयम्' इति च भागवते । आत्मा चान्तरात्मा चेति द्वे शीर्षे । अन्तर्यामिरूपम्, सर्वगतं रूपमिति । सप्त लोकाः सप्त हस्ता अस्य । त्रिधा बद्धः स्वेच्छया, श्वेतद्वीपे, अनन्तासने वैकुण्ठे च । अथाध्यात्मम्, चक्षुषि कण्ठे हृदये च । अथच अस्ति आसीद् भविष्यतीति त्रिष्वपि कालेषु व्यवहारगोचरतया बद्ध इत्युपचर्यते । अथाप्यबद्धः । वृषभोऽभीष्टवर्षिता । रोरवीति शब्दं करोति ब्रह्मादीनुपदिशति । किमिति? महान् देवः मर्त्यानाविवेशेति । आवेशप्रयोजनं च जागरिताद्यवस्थात्रयप्रेरणमिति 'त्रिधा बद्धः' इति पूर्व-मेवोक्तम् ।

शब्दराशिपरतयाऽपि शक्यं व्याख्यातुम् । तथाहि–चत्वारि शृङ्गाणि नामा-न्याख्यातान्युपसर्गा निपाताश्च । अथच परापश्यन्तीमध्यमावैखरीरूपाणि चत्वारि । त्रयो अस्य पादाः त्रयः काला भूतभविष्यद्वर्तमानाः । द्वे शीर्षे द्वावर्थभूतौ मुख्यतो भगवान्, समाकर्षेण जगदिति । सप्त हस्ता विभक्तयः कारकाणि वा । त्रिधा बद्धः उरसि शिरसि कण्ठे च । त्रिभिर्वचनैर्वा । वृषभो वर्षणाद् वेदात्मा शब्दराशिः । रोरवीति क्रियासमभिहारेण उद्घोषयति । किमिति? महनीयो देवो नारायणो मर्त्यानन्तर्यामितयाऽऽविवेशेति 'एष त आत्माऽन्तर्याम्यमृतः' इति । सर्वान्तर्यामी भगवान् सर्वशब्दाभिधेय इतीदमेव सर्वशास्त्रार्थ इत्येतावत् । अत्र 'द्वे शीर्षे' इति, 'मर्त्तियान्' इति च विश्लेषेण छन्दःपूतिः ॥ ३ ॥

**त्रिधाहितम्पणिभिर्गुह्यमानङ्गविदेवासोघृतमन्वविन्दन् ।**
**इन्द्रऽएकंसूर्य्यऽएकञ्जजानवेनादेकंस्वधयानिष्टतक्षुः ॥ ४ ॥**

**त्रिधा । हितम् । पणिभिः । गुह्यमानम् । गवि । देवासः । घृतम् । अनु । अविन्दन् ॥ इन्द्रः । एकम् । सूर्य्यः । एकम् । जजान । वेनात् । एकम् । स्वधया । निः । ततक्षुः ॥ ४ ॥**

तदेवं सर्वशास्त्राणां भगवत्परत्वम्, भगवतश्च सर्वपदवाच्यत्वं सर्वव्यापकत्वं सर्वान्तरत्वं सर्वनियामकत्वं चाभिधायेदमिदानीमुच्यते–त्रिधा हितं

पणिभिर्गुह्यमानमिति । पणिभिर्वेदार्थं व्यवहरद्भिः, वेदवचनैः स्तुवद्भिर्वा देवैरृषिभिश्च गुह्यमानं निगूह्यमानम् । 'परोक्षप्रिया इव हि देवाः' इति हि वदन्ति । कर्तव्याकर्तव्यविषये भगवदिच्छैव देवानां गुह्यं मानमिति च । 'पण व्यवहारे स्तुतौ च' इति धातुपारायणिकाः । उक्तदिशा त्रिधा निहितम्, त्रिषु ऋक्सामनिगदेषु, त्रिषु लोकेषु, चक्षुःकण्ठहृदयेषु च । त्रिधा ज्ञानभक्ति-वैराग्यैरुपासकानां हितम् । अथच कर्मिणां त्रिषु सवनेषु हितं निहितम् । ज्ञानि-भिरन्तर्बहिः सर्वगत्वेनेति त्रिधोपासितम्, घृतं दीप्तं भगवन्तं देवो गवि वेदवाचि अन्वविन्दन् मथनेन । लोके गवि घृतमिव गूढं सन्तं मथित्वा निर्ज्ञातवन्तः । 'सदैवाऽन्तरं पयस्युपहितं घृतं स्वयमिव श्रियो वल्लभम्' इति ह्यभियुक्तानां वचः । अथच ज्ञात्वा इन्द्र एकमृग्वेदं जजान ज्ञापयामास प्रकाशयामा-सेत्येतत् । सूर्य एकं यजुर्वेदं प्रकाशयामास । वेनः प्राणः । 'अयं वै वेनः । अस्माद् वा ऊर्ध्वा अन्ये प्राणा वेनन्ति । अवाश्चोऽन्ये । तस्माद् वेनः' (ऐ.ब्रा.४.३) इति ह्यामनन्ति । वेन गतौ । वेन सम्भक्तौ । 'वेनति रक्षति । वेनः प्रभुः' इत्यन्ये । वेनाद् वायोरेकं सामवेदं देवाः स्वधया सुखेन विज्ञाय निष्टतक्षुः निरूपितवन्त इति । 'पीडां वेनेति च प्राहुः' इति स्मरणात् 'वेन पीडायाम्' इति च पठनीयम् । तेन वेनां संसारपीडामत्ति नाशयतीति वेनाद् वायुरिति वा । वेनाद् वायुरेकं जजान । एवं देवा भगवन्तं निष्टतक्षुरित्यन्वयः । 'ऋचामृषि-स्ततः शक्रो यजुषां सूर्य एव च । सोमः साम्नां तृतीयास्ते प्रतिपत्तार ईरिताः' इति च । अत्र सोम इति चन्द्रमा उच्यते तृतीयप्रतिपत्तृत्वात् । मुख्यदेवता तु सोमः पवमानः साम्नाम् । वेनां सूर्यतापं अत्ति इति वेदनात् चन्द्रमा अपि स्यात् । 'वेनाद् दुःखस्य नाशनात्' इति हि स्मरन्ति । एताश्चतस्र ऋच ऐतरेयारण्यकेऽपि पठ्यन्ते (१०.१०.१५–१८) । आद्यास्तिस्रः मैत्रायणीय-संहितायामपि (१.६.२६-२८) । काठकसंहितायाम् (४०.४२-५२), काण्वसंहितायाम् (१९.३-१२), माध्यन्दिनसंहितायां च (१७.८९-९९) समग्रं सूक्तम् ॥ ४ ॥



**ए॒ताऽअ॑र्षन्ति॒हृद्या॑त्समु॒द्राच्छ॒तव्र॑जारि॒पुणा॒नाव॒चक्षे॑ ।**
**घृ॒तस्य॒धारा॑ऽअ॒भिचा॑कशीमिहि॒रण्ययो॑वेत॒सोमद्ध्ये॑ऽआसाम्**

**॥ ५ ॥ १ ॥**

**ए॒ताः । अ॒र्ष॒न्ति॒ । हृ॒द्या॑त् । स॒मु॒द्रात् । श॒त+व्र॑जाः । रि॒पुणा॑ । न । अ॒व॒+ चक्षे॑ ॥ घृ॒तस्य॑ । धारा॑ः । अ॒भि । चा॒क॒शी॒मि॒ । हि॒रण्यय॑ः । वे॒त॒सः । मद्ध्ये॑ । आ॒सा॒म् ॥ ५ ॥ १ ॥**

**॥ इति प्रथमो वर्गः ॥**

भगवज्ज्ञानजनकतया ज्ञानिनां हृद्यात् हृदयप्रियात् । 'हृदयस्य प्रियः' (अ.सू.४.४.९५) इति यत्प्रत्ययः । समुद्रात् वेदजलधेः । सोऽपि हि भगवदेकतानतया समुद्रिक्तः । एताः घृतस्य भगवतः गुणान् धारयन्तीति धाराः भगवद्गुणवचना ऋचः । अत एव च ता ऋचः । ऋचन्ति स्तुवन्ति भगवद्गुणा-निति । ऋच स्तुतौ । अर्षन्ति आगच्छन्ति । ज्ञानिनां मनस्यारोहन्ति । स्फुरन्ति चर्षीणां चित्ते । 'ऋषी गतौ' इति धातुपाठं पठन्ति । अथच अर्षन्ति अर्षयन्ति ज्ञापयन्ति च भगवत्तत्वम् । 'ऋष ज्ञाने' इति प्रतनो धातुपाठः । एवमर्थद्वयबोधनायैव पदपाठे न विभज्य पठितम्–आ+ऋषन्तीति । ताश्च गुणाधारा ऋचः शतव्रजाः अनन्तगतयः । एकैकापि ऋक् अमितान् गुणानाचष्ट इति । अथच रिपुणा भगवद्गुणद्वेषिणा अवचक्षे अवचक्षसे अवलोकयितुं यथा न शक्येत तथा अर्षन्ति निगूढतया बोधयन्ति । अनधिकारिणां वेदेषु प्रतिपादिता अपि भगवद्गुणा न प्रतिभासन्ते । ये वेदमधीत्यापि निर्गुणमेव ब्रह्म मन्यन्ते । अथच मन्त्रद्रष्टा वामदेवः स्वयमाह–अहं तावद् रिपुणा निर्गुणत्वोपासकेन सह वेदमन्त्रान् नावचक्षे नावमन्ये, अवमत्या न पश्यामीत्यर्थः । यत एता घृतस्य धारा ऋचः भगवद्गुणधारयित्र्यः अभिचाकशीमि अभीक्ष्णं पश्यामि । आसामृचां मध्ये हिरण्ययो वेतसः सदा निहित इति च पश्यामि । ज्ञानिनां हितश्च सर्वैर्गुणै रमणीयश्चेति हिरण्मय एव हिरण्ययः । 'हितश्च रमणीयश्च हिरण्मय इतीरितः'

इति ह्यभिदधति । 'हिरण्यं स्वरूपसुखं स्यात्' इति च । कथं वेतसः? वेति उदरस्थं जगत् सृष्टिकाले मातेव प्रजनयतीति वेतसः । वी प्रजने । सृष्टं जगद् वेति बहिरन्तर्व्याप्नोतीति वेतसः । वी व्याप्तौ । अन्ते च सर्वं वेति संहरतीति वेतसः । वी खादने । एवं सृष्ट्यादिकर्तृत्वेन वीयते ज्ञायते वेदविद्भिरिति वेतसः । वी गतौ । वेतेरसप्रत्यय इति दुर्गसिंहः । 'वियस्तुट् च' (९.४५) इति दशपादिकायाम् । 'वियो धातोरसच् प्रत्ययो भवति, तुट् चाऽगमः । वी गत्यादौ । वीयत इति वेतसः' इति वृत्तिकारः । अथ भगवत्परतायां काचनान्यैव निर्वचनसरणिरनुसरणीया । वयं पुनः प्रत्यक्षरं निर्वचनलोलुपाः । न हि व्यर्थेन प्रत्ययेन किञ्चित् कृत्यम् । तत्रापि शक्यं गुणानुसन्धानम् । तथाहि वं ज्ञानम् । तेनेता वेताः भगवज्ज्ञानिनः, तानयं सरतीति वेतसः, गजेन्द्रमिव तापसः । सारत्वाच्च सः । अत्र 'हृदियात् समुद्रात्' इति विश्लेषेण छन्दःपूर्तिः ॥ ५ ॥ १ ॥

**स॒म्यक्स्र॑वन्तिस॒रितो॒नधेना॑ऽअ॒न्तर्हृ॒दामन॑सापू॒यमा॑नाः ।**
**ए॒तेऽअ॑र्षन्त्यू॒र्म्मयो॑घृ॒तस्य॑मृ॒गाऽइ॑वक्षि॒पणो॑रीष॑माणाः ॥ ६ ॥**

**स॒म्यक् । स्र॒व॒न्ति॒ । स॒रित॑ः । न । धेना॑ः । अ॒न्तः । हृ॒दा । मन॑सा । पू॒य॒मा॑नाः ॥ ए॒ते । अ॒र्ष॒न्ति॒ । ऊ॒र्म्मय॑ः । घृ॒तस्य॑ । मृ॒गा+इ॑व । क्षि॒प॒णोः । ईष॑माणाः ॥ ६ ॥**

ता इमा धेनाः स्तुतिवाचः, या ऋच इत्याचक्षते । या हृद्या भगवज्ज्ञानिनाम्, घृतस्य धाराइव भोजनप्रियाणाम् । सरितो न सरितइव समुद्रम्, सम्यक् स्रवन्ति भगवन्तम् । 'धेनाः । ग्नाः । विपा । नना । कशा । धिषणा । गौः । अक्षरम् । मही । अदितिः । शची । वाक्' इति वाक्पर्यायेषु निघण्टुः । कीदृश्यो धेनाः? अन्तः स्थितेन वाच्यतया, हरति सर्वं दोषजातमिति हृदा, मनसा ज्ञानरूपेण भगवता स्वयं पूयमानाः पवित्रिताः । अन्तः स्वान्ते हृदा प्रीत्या मनसा मननेन च पवित्रीकृताः । ऊर्मयः । अर्यन्त इत्यूर्मय इति वैयाकरणाः ।



'अर्तेरूच' (१.१४) इति दशपादिका । 'अर्तेर्धातोर्मिप्रत्ययो भवति ऊ इत्ययमादेशश्च । ऋ गतौ ऋच्छति इयर्ति अर्यते वा ऊर्मिस्तरङ्गः' इति वृत्तिकारः । वयं तु स्तुतिपरतया कश्चिदन्यमेव निर्वचनप्रकारं पश्यामः । अधिकमुरुभिरेव मीयते गूढार्थ एषामिति ऊर्मयः वेदजलधेः सूक्ततरङ्गाः । एते घृतस्य भगवतः ऊर्मयः गुणोक्तितरङ्गाः अर्षन्ति अस्मान् प्रत्यागच्छन्ति, आगत्य च अर्षयन्ति बोधयन्ति भगवन्महिमानम् । कथम्? क्षिपतीति क्षिपणोर्वायोर्मृगाइव । वातमृगा इति ख्याता द्रुतगामिनो हरिणप्रभेदा विशृङ्गाः । ये वियति बहुतरं स्तोकमुर्व्यां प्रयान्ति । 'वायौ वसन्ते क्षिपणुः' इति यादवप्रकाशः । 'वातायुः स्याद् वातमृगो जवी वातप्रमीः शिवः' इति च । तदेतदाह–ईषमाणाः । ईष गतौ । ईषमाणाः धावन्तः स्वनिकेतं प्रति । एवमूर्मयः अस्मन्मनसि तिष्ठन्ति । ते यथा व्याधान् वञ्चयित्वा धावन्धावं स्वनिकेतमर्षन्ति एवं भगवद्गुणदूषकान् वञ्चयित्वाऽस्मान् प्रविशन्ति । अत्र 'अर्षन्ति ऊर्म्मयः' इति विश्लेषेण छन्दःपूर्तिः ॥ ६ ॥

**सिन्धो॑रिवप्राध्व॒नेशू॑घ॒नासो॒वात॑प्रमियᳶप्पतयन्तिय॒ह्वाः ।**
**घृ॒तस्य॒धारा॑ऽअरु॒षोनवा॒जीकाष्ठा॑भि॒न्दन्नू॒र्म्मिभि॒ᳶप्पिन्व॑मानः ॥**
**॥ ७ ॥**

**सिन्धो॑ः+इव । प्र॒+अ॒ध्व॒ने । शू॒घनास॑ः । वात॑+प्रमियः । प॒त॒य॒न्ति॒ । य॒ह्वाः ॥ घृ॒तस्य॑ । धारा॑ः । अ॒रु॒षः । न । वा॒जी । काष्ठा॑ः । भि॒न्दन् । ऊ॒र्म्मिभि॑ः । पिन्व॑मानः ॥ ७ ॥**

वातप्रमियः वातप्रम्यः । स्त्रीलिङ्गे धीशब्दवच्च रूपम् । वातं प्रमिमते परिमिमत इति । वातेन सह स्पर्धमानाइव धावन्तीत्यर्थः । अशृङ्गा हरिण्यः । 'योषिति वातप्रमीः पवनमृगः' इति बोपालितः । पूर्वमन्त्रे क्षिपणोर्मृगा इत्युक्ता एवात्र वातप्रमीपदेनोक्ताः । तत्र मृगाः, अत्र मृग्य इति विशेषः । ताः सिन्धोः सकाशादिव स्वनिकेताय प्राध्वने, तृतीयार्थे सप्तम्यर्थे वा चतुर्थी । प्रकृष्टेन निरातङ्केन अध्वना, निरातङ्के वाऽध्वनि । शूघनासः । आशु घ्नन्ति गच्छन्तीति आशुघनास एव

शूघनासः । हन गतौ । 'आशु इति शु इति च क्षिप्रनामनी भवतः' इति निरुक्तम् । शूषेण गर्भेण घनाः गर्भिण्य इति वा । शूष प्रसवे । यः शूष्यते स शूषो गर्भः । आनन्दघना वा । यह्वशब्दो महन्नामसु पठ्यते वैदिकनिघण्टौ । तेन यह्वाः सङ्ख्यया महत्यः । का निरुक्तिः? अत्र विवदन्ते वैयाकरणाः । दशपादिकावृत्तिकार आह–'या प्रापणे । अस्य ह्रस्वत्वं निपात्यते हुगागमश्च । यान्त्यनया तांस्तानर्थानिति यह्वा' इति । 'यात्यनेन तांस्तानर्थानिति यह्वः' इति क्वचित् । 'यजतेर्जकारस्य हकारो निपात्यते' इत्यन्ये । तत्पक्षे यजन्ति सङ्गता भवन्तीति यह्वाः । 'यसेर्ह च' (२.३.१३१) इति सरस्वतीकण्ठाभरणे भोजः । तत्पक्षे यसु प्रयत्ने । यस्यति यसति वा यह्वा । 'यसेः क्वन् प्रत्ययः ह्श्चान्तादेशः' इति दण्डनाथनारायणः । यन्ति परस्परं ह्वयन्ति चेति यह्वा इति तु वयम् । परस्परं वाश्यमाना यान्तीत्यर्थः । तादृश्यो वातप्रमियः स्वमोकः प्रति पतयन्ति गच्छन्ति । पत गतौ चुरादिः । एवं घृतस्य धारा भगवद्गुणवादिन्य ऋचः सिन्धोः वेदजलधेरुद्गताः, प्राध्वने सुपथाय मोक्षरूपाय, ज्ञानिनां मोक्षमार्गं दर्शयितुम्, शूघनासः शीघ्रगामिन्यः, बह्वर्थगर्भिता वा वातेन मुख्यप्राणेन प्रकटं प्रकर्षेण भगवत्परतया मीयन्ते ज्ञाप्यन्त इति वातप्रमियः । तथाह्युक्तम्–'महिषस्य वर्पस ईशानासः शवसा क्रन्त सूरयः' इति, 'गुहा सन्तं मातरिश्वा मथायति' इति च । यह्वाः सङ्गताः सत्यः ज्ञानिहृदयं प्रति पतयन्तीति ।

अथच सिन्धोरूर्मयइव घृतस्य धाराः । समग्रो वेदः । सिन्धुः समुद्रइव । तस्यैकैकाऽपि ऋगूर्मिरिव । वेदसिन्धोस्तरङ्गा हीमे वेदमन्त्राः । ता इमा गुणधारा ऋचः बह्वर्थगर्भिताः वातबोधिताः सङ्गत्य आह्वयन्त्य इव ज्ञानिगणं प्रति प्रकृष्टस्याध्वनस्तत्ववादस्य निदर्शनाय गच्छन्तीति । मार्गदर्शने पतयन्ति पतिवदाचरन्ति प्रभवन्तीति च । अर्थद्वयस्य स्फोरणायैव णिजन्तप्रयोगः । अनन्तानामपि मन्त्राणां गतिसामान्यादेकत्वमवगमयितुं दृष्टान्तान्तरमाह–अरुषो न वाजीः । अरुषः अरुणवर्णः । अग्निरिव द्योतमानः । 'अग्निर्वा अरुषः'



(३.९.४) इति हि तैत्तिरीयब्राह्मणे । काष्ठा भिन्दन् सर्वतोदिशं गच्छन्, ऊर्मिभिः सेनातरङ्गैः । पिन्वमानः स्वीयानामभीष्टं क्षरन् । विजयमान इत्यर्थः । पिवि सेचने । वाजी न योद्धेव । वाजमिति युद्धम् । तेन वाजी योद्धा । एवं मन्त्रग्रामोऽपि ऊर्मिभिरर्थतरङ्गैः काष्ठां कालमानं भिन्दन्, अपौरुषेयतया कालातीतः सन्, भक्तानामभीष्टं क्षरन्, अरुषः अरून् दुष्टान् स्यन् निरस्यन्, तेषामात्मानमनाविष्कुर्वन् भातीत्यर्थः ॥ ७ ॥

**अ॒भिप्र॑वन्त॒सम॑नेव॒योषाः॑ᳲक्कल्याण्य॒१॒॑स्मय॑मानासोऽअ॒ग्निम् ।**
**घृ॒तस्य॒धारा॑स्स॒मिधो॑नसन्त॒ताजु॑षाणोह॑र्यतिजा॒तवे॑दाः ॥ ८ ॥**

**अ॒भि । प्र॒व॒न्त॒ । सम॑ना+इव । योषाः॑ । क॒ल्या॒ण्यः॑ । स्मय॑मानासः । अ॒ग्निम् ॥ घृ॒तस्य॑ । धाराः॑ । स॒म्+इधः॑ । न॒स॒न्त॒ । ताः । जु॒षा॒णः । ह॒र्य॒ति॒ । जा॒त+वे॑दाः ॥ ८ ॥**

देशतः कालतश्च समो ना नारायणो यस्याः सा समना सर्ववेदमानिनी लक्ष्मीः । योषाः छन्दोमानिन्यः स्वाहासञ्ज्ञाद्याः । तथाहि गायत्र्या अग्निभार्या स्वाहा । उष्णिहः सूर्यपत्नी सञ्ज्ञा । अनुष्टुभः सोमभार्या रोहिणी । बृहत्या बृहस्पतिभार्या तारा । पङ्क्तेर्मित्रावरुणयोभार्ये चर्षणी च गङ्गा च । त्रिष्टुभ इन्द्रभार्या शची । जगत्या एताः सर्वा देव्य इति । आसां सर्वासां प्रधानत्वेन सरस्वतीभारत्यौ च गृह्येते । ते हि सर्ववेदमानिन्यौ विशिष्य च गायत्र्या बृहत्याश्च मानिन्यौ । सरस्वती चानुष्टुभः । ता एता योषा वेदमानिन्यो देव्यः समनेव साक्षाल्लक्ष्मीरिव भगवत्प्रवणतया कल्याण्यः मङ्गल्याः अत एव स्मयमानाः स्वकर्तव्येऽभिमानयुक्ताः सत्यः अग्निनारायणं अभितः पौनःपुन्येन प्रवन्त प्रवन्ते गच्छन्ति । प्रुङ् गतौ । तमेव प्रतिपादयन्तीत्यर्थः । कास्ताः? घृतस्य दीप्तस्याग्निनारायणस्य धारयित्र्यः छन्दोमानिन्यः, तद्रथवहनाच्च तस्य धारयित्र्यः । समिन्धयन्ति गुणगानेन प्रकाशयन्तीति समिधो भूत्वा नसन्त नसन्ते

नम्रीभवन्ति । इन्धी दीप्तौ । नस कौटिल्ये । नम्रत्वे चेति वक्तव्यम् । बाह्ययज्ञे अग्निरन्यः । घृतमन्यत् । अत्राग्निरेव घृतम् । बाह्ययज्ञे घृतस्य धारया समिधः समिध्यन्ते । अत्र घृतस्य धारैव समिध इत्यपूर्वोऽयं मानसयज्ञः । ताः छन्दोदेवताः घृतस्य धाराः जुषाणः प्रीत्या सेवमानोऽयं जातवेदा नारायणो हर्यति शोभते । ताः स्तुवन्तु मामिति कामयते वा । हर्य गतिकान्त्योः । जाता वेदा येन यस्मै च , स जातवेदाः । जातंजातं वेदेति च । अतो युक्तं स वेदमानिनीः कामयत इति । अत्र 'कल्याणियः' इति विश्लेषेण छन्दःपूर्तिः ॥ ८ ॥

**कन्याऽइववहतुमेतवाऽउंऽअञ्ज्यंञ्जानाऽअभिचाकशीमि ।**
**यत्रसोमस्सूयतेयत्रयज्ञोघृतस्यधाराऽअभितत्पवन्ते ॥ ९ ॥**

**कन्याः+इव । वहतुम् । एतवै । ऊँइति । अञ्जि । अञ्जानाः । अभि । चाक-शीमि ॥ यत्र । सोमः । सूयते । यत्र । यज्ञः । घृतस्य । धाराः । अभि । तत् । पवन्ते ॥ ९ ॥**

पूर्वप्रस्तुता योषा एवात्र कन्यात्वेन रूप्यन्ते– कन्याइव । यथाऽनूढाः उद्विवक्षवः कन्याः योग्यं पतिं वहतुं वोढुम्, ऊढ्वा च तेन सह एतवैउ एतुमेव, अज्यत इत्यञ्जि म्रक्षणेन अभ्यक्तं स्वशरीरं अञ्जानाः मार्जनादिना पुनरतिकान्तियुक्तं कुर्वाणा दृश्यन्ते । अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । 'खनि-कषि-अञ्जि-असि-वसि- ध्वनि-सनि-ग्रन्थि-चरिभ्यश्च' (दशपा.१.६८) इत्युक्तेः इप्रत्यये अञ्जीति रूपम् । एवमिह घृतस्य धाराः छन्दोदेवताः, दीप्तत्वात् कन्याइव । वहतुं मन्त्रार्थत्वेन घृतं ब्रह्म वोढुम्, ऊढ्वा च ज्ञानिनः एतवै गन्तुं च । तुमुनर्थे तवैप्रत्ययः । अञ्जि मन्त्रेषु व्यक्तं ब्रह्म ज्ञानिहृदये पुनरञ्जाना व्यञ्जयन्त्यः अभिचाकशीमि साक्षात्करोमीति सूक्तेन सह छन्दोमानिनीरपि पश्यन् वामदेवः सविस्मयमाह । यत्र घृतस्य धारासु ऋक्षु सोमः पवमानः सूयते उत्पद्यते व्यक्तो भवतीत्यर्थः । स्तूयते वा । यज्ञः नारायणश्च सूयते । 'यज्ञो वै विष्णुः' इति हि श्रूयते । एतेन समग्रस्य सूक्तस्य प्राणपरत्वं चाऽह । तेनाभीष्टक्षरणाद् दीप्तत्वाद्



घृतं प्राणतत्वमपि । एवं सर्वा अपि ऋचः तत् प्राणनारायणाख्यं घृतमभि पवन्ते गच्छन्ति । प्रतिपादयन्तीत्येतत् । प्रतिपाद्य चाऽत्मानं पावयन्ति । 'पुङ् गतौ । पुङ् पवने' इति काशकृत्स्नः । 'पूङ् पवने' इति पाणिनीयाः । अत्र 'अञ्जि+अञ्जानाः' इति विश्लेषेण छन्दःपूर्तिः ॥ ९ ॥

**अभ्यर्षतसुष्टुतिङ्गव्यमाजिमस्मासुभद्राद्रविणानिधत्त ।**
**इमँय्यज्ञन्नयतदेवतानोघृतस्यधारामधुमत्पवन्ते ॥ १० ॥**

**अभि । अर्षत । सु+स्तुतिम् । गव्यम् । आजिम् । अस्मासु । भद्रा । द्रवि-णानि । धत्त ॥ इमम् । यज्ञम् । नयत । देवताः । नः । घृतस्य । धाराः । मधु+मत् । पवन्ते ॥ १० ॥**

अयि घृतस्य धाराः छन्दोदेवता इमां भगवत्परतया सुष्ठु मदास्यादुद्गतां स्तुतिमभिजानीत । अभिज्ञाय भगवत्यर्पयतेत्येतत् । न केवलम् किन्त्वाजिम्, अजस्य ब्रह्मणो वायोश्चेयमिति आजिम्, द्वितीयतया ब्रह्मवायुसम्बन्धिनी-मिमां स्तुतिमभिज्ञाय तयोरप्यर्षयत गमयत । गौरिति सरस्वती भारती च । तयोरिदं छन्दो गव्यमित्यभिज्ञाय तयोरपीदमर्पयत । अथच– अज क्षेपणे, अज्यते क्षिप्यतेऽत्रेति आजिः समुदायः । गव्यं सरस्वतीभारतीभ्यामभिमन्य-मानम् आजिमृक्समुदायं सुखमयस्य भगवतः स्तुतिरूपं तेष्वर्पयत । अस्मासु च भद्राणि ज्ञानरूपाणि धत्त दत्त धारयत च यथा मध्ये न नश्येयुः । इमं स्तुतिरूपं वाचिकं मानसं च यज्ञं पूर्वोक्ताः देवताः प्रति नयतेति तात्पर्यात् पुनर्वचनम् । न इमा घृतस्य धाराः ऋग्रूपा मधुमत् मधुरं युष्मान् पवन्ते प्राप्नुवन्तीति ॥ १० ॥

**धामन्तेविश्वम्भुवनमधिश्रितमन्तस्समुद्रेहृद्य१न्तरायुषि ।**
**अपामनीकेसमिथेयऽआभृतस्तमश्याममधुमन्तन्तऽऊर्म्मिम् ॥**
**॥ ११ ॥**

धामन् । ते । विश्वम् । भुवनम् । अधि । श्रितम् । अन्तरिति । समुद्रे । हृदि । अन्तः । आयुषि ॥ अपाम् । अनीके । सम्+इथे । यः । आ+भृतः । तम् । अश्याम । मधु+मन्तम् । ते । ऊर्मिम् ॥ ११ ॥

**॥ इति द्वितीयो वर्गः ॥**

**इति घृतसूक्तं सम्पूर्णम् ॥**

हे घृत, ब्रह्मन्, ते धामन् धामनि तेजसि । तेजोरूपे त्वयीति यावत् । विश्वं भुवनमधीनतया श्रितम् । सर्वाधिके धामनि श्रितमिति वा । तथा मधुमन्तं आनन्दमयं तव ऊर्मिं उरुभिर्ज्ञानिभिरुरुधा मेयं स्वरूपमश्याम । अश भोजने । अनुभवेम । कीदृश ऊर्मिः? यः समुद्रे वेदजलधौ अन्तर्निगूढतया आभृतः सम्भृतः । आहूतो वा । ह्रस्य भः । अथ च यः समुद्रेऽन्तः कविभिराभृतः । 'यमन्तः समुद्रे कवयोऽवयन्ति' इति श्रुतेः । अत एव च ज्ञानिनां हृद्यन्तराहितः । आयुषि शतवर्षात्मके स्थितः । 'तं शतं वर्षाण्यभ्यार्चत् तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति' इति श्रुतेः । आयुषि जीवनप्रदे वायौ च स्थितः । समिथे देवासुरसङ्ग्रामे अपामनीके स्थितः । आप इति देवा उच्यन्ते देवसेनायां सन्निहितः । 'ब्रह्म ह देवेभ्यो विजिग्ये' इति श्रुतेः । अथ च ज्ञानयुद्धे पुण्यवतां विजयाय अपां कर्मणां समुदाये सन्निधाय विजयप्रदः । एते मन्त्रा यथायोग्यं प्राणपरतयाऽप्यनुसन्धेयाः । अत्र द्वितीयपादस्य 'हृदियन्त-रायुषि' इति विश्लेषेण जागतत्वम् । कम्पस्वर एव वा छन्दः पूरयति । 'मधुमन्तं त ऊर्मिम्' इति विश्लेषेण तुरीयचरणोऽपि जागत इति सर्वं चतुरश्रम् ॥ ११ ॥

**इत्थमाचार्यगोविन्दो घृतसूक्तार्थमद्भुतम् ।**
**विववार यथाबोधं गुरुदेवप्रसादतः ॥**

**इत्याचार्यगोविन्दस्य कृतिषु घृतसूक्तभाष्यं सम्पूर्णम् ॥**

—०—

# अथ वाजसनेयिनां पाठक्रमः

[माध्यन्दिनसंहितायाः सप्तदशोऽध्याये नवमश्चरमोऽनुवाकस्त्रयोद-शर्चः । तत्राऽद्यमृग्द्वयं विहायावशिष्टा ऋचो बह्वृचानां घृतसूक्तम् । काण्वपाठे चैकोनविंशेऽध्याये प्रथमोऽनुवाकः ।]

**हरिः ओ३म् ॥**

**इम७स्तनमूर्ज्जस्वन्तन्धयापाम्प्रपीनमग्नेसरिरस्यमद्ध्ये ।**
**उत्सञ्जुषस्वमधुमन्तमर्व्वन्त्समुद्रिय७सदनमाविशस्व ॥ ८७ ॥**

**घृतम्मिमिक्षेघृतमस्ययोनिर्घृतेश्रितोघृतंवस्यधाम ।**
**अनुष्वधमावहमादयस्वस्वाहाकृतंवृषभवक्षिहव्यम् ॥८८॥**

**समुद्रादूर्म्मिर्म्मधुमाँ२॥उदारदुपा७शुनासमममृतत्वमानट् ।**
**घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः ॥ ८९ ॥**

**वयन्नामप्रब्रवामाघृतस्यास्मिन्यज्ञेधारयामानमोभिः ।**
**उपब्रह्माशृणवच्छस्यमानञ्चतुश्शृङ्गोवमीद्गौरऽएतत् ॥ ९० ॥**

---

* अस्य मन्त्रग्रामस्य ऋष्यादिकमाह कात्यायनः सर्वानुक्रमसूत्रे– **'इमं त्रयोदशर्चं आग्नेयस्त्रैष्टुभोऽनुवाकः, यज्ञस्तुतिर्घृतस्तुतिर्वा वसोर्धाराभिवादिनी वा, घृतं मिमिक्षे गृत्समदः, समुद्राद् वामदेवः, चत्वारि शृङ्गा यज्ञपुरुषदेवत्य ऋषभो मन्त्रः'** इति । अयमर्थः–अयमनुवाकस्त्रयोदशर्चं आग्नेयः अग्निदेवत्यः । मन्त्राणां त्रिष्टुप् छन्दः । अस्मिन् **'धामन्ते'** इति मन्त्रोऽपि त्रैष्टुभ एव । द्व्यक्षराधिक्यात् स्वराट् त्रिष्टुबिति वक्तव्यम् । बह्वृचास्तु जागतमाहुः । **'घृतं वस्य'** इत्येतत् बह्वृचाः काण्वाश्च **'घृतम्वस्य'** इति पठन्ति । प्रथममुकारस्य मकारेण सन्धौ- **'घृतम्+उ=घृतमु+अस्य=घृतम्वस्य'** इति रूपम् । उत्तराक्षरेण प्रथमं सन्धौ- **'उ+अस्य=वस्यं'** इति ततश्च **'घृतं वस्य'** इति रूपम् ।

चत्वारिशृङ्गात्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तासोऽअस्य ।
त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्त्याँ२॥आविवेश ॥ ९१ ॥

त्रिधाहितम्पणिभिर्ग्गुह्यमानङ्गविदेवासोघृतमन्वविन्दन् ।
इन्द्रऽएकꣳसूर्य्यऽएकञ्जजानवेनादेकꣳस्वधयानिष्टतक्षुः ॥ ९२ ॥

एताऽअर्षन्तिहृद्यात्समुद्राच्छतव्व्रजारिपुणानावचक्षे ।
घृतस्यधाराऽअभिचाकशीमिहिरण्ययोवेतसोमद्ध्यऽआसाम् ॥

सम्यक्स्रवन्तिसरितोनधेनाऽअन्तर्हृदामनसापूयमानाः ।
एतेऽअर्षन्त्यूर्म्मयोघृतस्यमृगाऽइवक्षिपणोरीषमाणाः ॥ ९४ ॥

सिन्धोरिवप्राध्वनेशूघनासोवातप्रमियᳲपतयन्तियह्वाः ।
घृतस्यधाराऽअरुषोनवाजीकाष्ठाभिन्दन्नूर्म्मिभिᳲप्पिन्वमानः ॥

अभिप्रवन्तसमनेवयोषाᳲक्कल्याण्यꣳस्मयमानासोऽअग्निम् ।
घृतस्यधारास्समिधोनसन्तताजुषाणोहर्यतिजातवेदाः ॥ ९६ ॥

कन्याऽइववहतुमेतवाऽउऽअञ्ज्यञ्जानाऽअभिचाकशीमि ।
यत्रसोमस्सूयतेयत्रयज्ञोघृतस्यधाराऽअभितत्पवन्ते ॥ ९७ ॥

अभ्यर्षतसुष्टुतिङ्गव्यमाजिमस्मासुभद्राद्रविणानिधत्त ।
इमँय्यज्ञन्नयतदेवतानोघृतस्यधारामधुमत्पवन्ते ॥ ९८ ॥

धामन्तेविश्वम्भुवनमधिश्रितमन्तस्समुद्रेहृद्यꣳन्तरायुषि ।
अपामनीकेसमिथेयऽआभृतस्तमश्याममधुमन्तन्तऽऊर्म्मिम् ॥

—०—

# २. भाग्यसूक्तम्



**ॐ ॥ भगवन्तं खगवन्तं नगवन्तं वामकरेऽथ सौभगवन्तम् ।**
**नाव्ये चोरगवन्तं नौमि भवन्तं निजे जने कृपावन्तम् ॥**

अथातो भाग्यसूक्तं व्याख्यास्यामः ।

बाह्वृच्ये सप्तममण्डले एकचत्वारिंशं सप्तर्चं सूक्तम् । वसिष्ठ ऋषिः । प्रथमा जगती । अन्यास्त्रिष्टुभः । भाग्यदेवता नारायणो देवता । अन्याश्च यथायथम् ॥

अथर्ववेदे चेदं पठ्यते (३.१६) स्वस्तिप्रार्थनासूक्तमिति । तत्र चाथर्वा ऋषिः । आद्यर्चस्य अग्निः, इन्द्रः, मित्रावरुणौ, अश्विनौ, भगः, पूषा, ब्रह्मणस्पतिः सोमो रुद्रश्च देवताः । द्वितीयतृतीयपञ्चमीनां भगो देवता । चतुर्थ्या भगश्च आदित्यश्च । षष्ठ्या दधिक्रावा, अश्वाश्च । सप्तम्या उषाः । आद्या आर्षी जगती । चतुर्थी भुरिक् पङ्क्तिः । अन्यास्त्रिष्टुभः ।

'प्रातर्भागं जगत्याद्या लिङ्गोक्तदेवताऽन्त्योषस्या' इत्यृग्वेदानुक्रमणिका । 'भागं भगदेवत्यम् । लिङ्गोक्तदेवता अग्नीन्द्रमित्रावरुणाश्विभगपूषब्रह्मण-स्पतिसोमरुद्रदेवत्येत्यर्थः । अश्वावतीरित्यन्त्या सप्तम्युषोदेवत्या' इति षड्गुरुशिष्यः ।

'एके तु प्रातरित्यस्यां भगमेव प्रचक्षते ।
'आदावन्ये तु ऋषयः कीर्तयन्ति प्रसङ्गतः ।
'सूक्तेऽस्मिन् देवता अन्याअन्यास्तत्र भवन्ति च ॥



'सालोक्यात् साहचर्याद्वा संस्तवादथवा पुनः ।
'गणस्थानाद् भक्तितो वा कीर्त्यन्तेऽन्यास्तु देवताः' इति बृहद्देवता ।

'निवेष्टुकामो रोगार्तो भगसूक्तं जपेत् सदा ।
'निवेशं विशति क्षिप्रं रोगैश्च परिमुच्यते' इत्यृग्विधानम् ।

तत्र प्रथमो मन्त्रः–

**हरिः ओ३म् ॥**

**प्रातरग्निम्प्रातरिन्द्रंहवामहेप्रातर्म्मित्रावरुणाप्रातरश्विना ।**
**प्रातर्भगम्पूषणम्ब्रह्मणस्पतिम्प्रातस्सोमंमुतरुद्रंहुवेम ॥ १ ॥**

**प्रातः । अग्निम् । प्रातः । इन्द्रम् । हवामहे । प्रातः । मित्रावरुणा । प्रातः । अश्विना ॥ प्रातः । भगम् । पूषणम् । ब्रह्मणः । पतिम् । प्रातः । सोमम् । उत । रुद्रम् । हुवेम ॥ १ ॥**

अत्र तुरीयचरण एकादशाक्षर इति वस्तुत इयं निचृज्जगती । 'प्+रातः' इति किञ्चिद्विश्लेषेण द्वादशाक्षरत्वसम्पत्त्या केवला जगतीति सम्प्रदायः । 'प्रातः सोममुत रुद्रं हवामहे' इत्याथर्वणपाठे तु स्फुटं द्वादशाक्षरतेति भवतीयमार्षी जगती । प्रथमं तावत् प्रातरग्निं समाह्वयामः । वागिन्द्रियमानिनं स्तुतिसौष्ठवाय । भूस्थाने भगवत्प्रतीकत्वाच्च स प्रथमं स्तूयते । अन्यदेवानामस्मद्धवनवहनाच्च । योऽन्तः प्रविश्य वाचमिमां सञ्जीवयति सोऽग्निनारायणः स्तुतः । अथ मनस उल्लाघाय कर्मप्रवर्तनाय च मनोदेवं च पाणिदेवं चेन्द्रमाह्वयामः । वाङ्मनसदेवते स्तुते । अथ सङ्कल्पध्यानयोरहोरात्रं निर्विघ्नताया आह– प्रातर्मित्रावरुणावाह्व-यामः । सङ्कल्पदेवताऽहर्देवता च मित्रः । ध्यानदेवता रात्रिदेवता च वरुणः । अहोरात्रदेवतयोः सौमनस्यमभ्यर्थितम् । अथोषसः सौमनस्यं प्रार्थयते– प्रातरश्विनावाह्वयामः । उषःपती हि तौ । प्रातर्भगं च पूषणं चाऽह्वयामः । किन्देवते इत्येतौ स्तूयेते? योगक्षेमयोः । भगो भाग्ययोगस्य । पूषा च भाग्यपोषस्य क्षेमस्य । अथ ब्रह्मणस्पतिं बुद्धिमानिनं बृहस्पतिं वाक्पतिं प्राणं चाऽऽह्वयामः ।

पुनश्च मनोमानिनं विशेषतश्च श्रोत्रमानिनं सोमं श्रुतिसौष्ठवाय ह्वयामः। अन्ते च शारीरपुरुषं रुद्रं शारीररुजां द्रवणाय। अथच वाग्देव्या उमया सहितं मनोमानिनं रुद्रं चाऽह्वयामः। इदमिह हृदयम्। मुखतः प्रातरग्न्यादीनाह्वयामः। मुख्यतः पुनरग्न्यादिगतमग्न्यादिनामानं नारायणमिति। अङ्गागनेतृत्वादग्निः। परमेश्वरत्वादिन्द्रः। ज्ञानाज्ञानप्रदौ मित्रवरुणौ। अन्तर्यामी मित्रः। बहिर्व्यापी वरुण इति वा। मितिं प्रमितिं राति, सर्वमावृणोतीति। रामकृष्णावश्विनौ। भजनीयो भगः। पूर्णत्वतः पूषा। ब्रह्मणो वेदमानिन्याः श्रियः पतिः। मानसयज्ञे हवनमाह्वानम्। अन्यत्राऽहुतिदानेन प्रीणनं च। प्रातरित्यसकृदाम्रेडनेन प्रातर्हवने तात्पर्यविशेषं पुण्यविशेषं चाऽह। स हि सर्वकर्मणामोङ्कारः॥ १॥

**प्रातर्जितम्भगमुग्रंहुवेमवयम्पुत्रमदितेर्योविधर्ता।**
**आध्रश्चिद्यम्मन्यमानस्तुरश्चिद्राजाचिद्यम्भगम्भक्षीत्याह ॥ २॥**

**प्रातः+जितम्। भगम्। उग्रम्। हुवेम। वयम्। पुत्रम्। अदितेः। यः। वि+धर्ता॥ आध्रः। चित्। यम्। मन्यमानः। तुरः। चित्। राजा। चित्। यम्। भगम्। भक्षि। इति। आह॥ २॥**

अत्र तुरीयचरणे 'भक्षीति+आह' इति विश्लेषेण स्फुटमियं त्रिष्टुप्। आथर्वपाठे तु 'प्रातर्जितं भगमुग्रं हवामहे' इति प्रथमपादो द्वादशाक्षरः, तुरीयो दशाक्षर इति संहत्य चतुश्चत्वारिंशदक्षरता। प्रातर्जितमिति स्वरानुगुण्यादेकं पदम्। प्रातरेव प्रत्यूष एव सृष्टेः पूर्वमेव सर्वं जिगायेति स प्रातर्जित्। 'आत्मैवेदमग्र आसीत्' इत्यादेः। लयस्य चाष्टमो भागः प्रातः। अथवा सर्वं जयति प्राप्नोतीति पूर्णकाम उच्यते। प्रातः सन् सर्वं जयतीति वा। कथं प्रातः? प्रततो भवति, प्रताय्यते, प्रतरन्त्येतेनेति। भगं सेवनीयम्। भज सेवायाम्। द्वादशधा विभजनीयं वा। षड्गुणात्मकमिति वैदिकम्। भगवन्तमित्येतत्। बल्यादीनामुग्रम्। अथापि भाग्यदं च। पापानामुग्रमिति वा। अदितेः पुत्रमादित्यान्तर्यामिणम्। स्वयं च वामनम्। यो विधारकः तं वयं ह्वयामः। आध्रः आलम्ब्य यो ध्रियते, परोपजीवी, आधरमाणो वा। तुरश्च यस्त्वरते, परनिरपेक्षः शीघ्रकारी। उत राजा



चित्पृथिवीपतिरपि यं भगं मन्यमानः सर्वाधिकं मन्यमानः स्तुवानश्च भगं भाग्यं अस्मासु भक्षि भाजय सङ्क्रामयेत्याह। भगं सौभगं परिपूर्णं त्वमेव भक्षि भजसीत्याहेति वा। अथच, आध्र इति ब्रह्मा, तुर इति वायुः, राजेतीन्द्रश्च॥ २॥

**भगप्रणेतर्भगसत्यराधोभगेमान्धियमुदवाददन्नः।**
**भगप्रणोजनयगोभिरश्वैर्भगप्रनृभिर्नृवन्तस्स्याम ॥ ३॥**

**भग। प्रणेतरिति प्र+नेतः। भग। सत्य+राधः। भग। इमाम्। धियम्। उत्। अव। ददत्। नः॥ भग। प्र। नः। जनय। गोभिः। अश्वैः। भग। प्र। नृ+भिः। नृ+वन्तः। स्याम॥ ३॥**

अत्र तुरीयचरणे 'सियाम' इति विश्लेषेण केवला त्रिष्टुप्।

भगः प्रकर्षेण नयति। प्रकर्षं च नयति। सर्वनेता मोक्षदाता च। यस्य राधः राधनं दया वा सत्यं न क्वापि विफलं स सत्यराधाः। नोऽभीष्टं ददत् त्वमिमां धियमस्मदीयां स्तुतिं उदव उत्कृष्टामवगच्छ, रक्ष वा, प्रविश वा। अव अवगतौ रक्षणे प्रवेशे च। गोभिर्वेदैः, अश्वैः प्रातिभज्ञानैश्च नः प्रकृष्टान् जनय। नृभिः नयन्त्युत्तरोत्तरं ज्ञानपरम्परामिति शिष्यप्रशिष्यैर्वयं नृवन्तश्च प्रकर्षेण भवेम। मास्म अस्मास्वेव विच्छिद्यत ज्ञानपरम्परा॥ ३॥

**उतेदानीम्भगवन्तस्स्यामोतप्रपित्वऽउतमद्ध्येऽअह्नाम्।**
**उतोदितामघवन्त्सूर्य्यस्यवयन्देवानांसुमतौस्याम ॥ ४॥**

**उत। इदानीम्। भगवन्तः। स्याम। उत। प्रऽपित्वे। उत। मद्ध्ये। अह्नाम्॥ उत। उत्ऽइता। मघ+वन्। सूर्य्यस्य। वयम्। देवानाम्। सु+मतौ। स्याम॥ ४॥**

अत्र 'सियाम+उत' इति, 'सूरियस्य' इति, 'सुमतौ सियाम' इति विश्लेषेण केवला त्रिष्टुप्। 'उतोदितो मघवन्' इत्याथर्वणः पाठः। तत्पक्षे छन्दोऽपि न त्रिष्टुप्। किन्तु भुरिक् पङ्क्तिः। 'उतेदानीं भगवन्तः स्याम' इति दशाक्षराणि।

‘उत प्रपित्व उत मध्ये अह्नाम्’ इत्येकादशाक्षराणि । उत्तरार्धे च दशाक्षरौ पादावित्येकाक्षराधिका भुरिक् ।

उतेदानीं त्वया भगेन वयं भगवन्तः स्याम । अह्नां प्रपित्वे प्राप्तावपि सूर्योदयात्परमपि अप्रळीनभगवत्प्रज्ञा भगवन्तः स्याम । उताह्नां मध्ये मध्याह्नेऽपि । अपिच मघवन् सर्वयज्ञेड्य, यशस्विन्, धनवन् वा । ‘धनं वाव मघम्’ इति च श्रुतिः । सूर्यस्य उदिता उदितावुदये सति अस्माभिः क्रियमाणे आराधने वयं तत्वदेवानां सुमतावनुग्रहबुद्धौ स्याम । ‘न देवा दण्डमुद्यम्य रक्षन्ति पशुपालवत् । यं तु रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम्’ इति हि भारते ॥ ४ ॥

**भग॑ऽए॒वभग॑वाँअस्तुदे॒वास्तेन॑व॒यम्भग॑वन्तस्स्याम ।**
**तन्त्वा॑भग॒सर्व॒ऽइज्जो॑हवीति॒सनो॑भगपु॒रऽए॒ताभ॑वे॒ह ॥ ५ ॥**

**भग॑ः । ए॒व । भग॑+वान् । अ॒स्तु । दे॒वाः । तेन॑ । व॒यम् । भग॑+वन्तः । स्या॒म् ॥ तम् । त्वा॒ । भ॒ग । सर्वः॑ । इत् । जो॒हु॒वी॒ति॒ । सः । नः॒ । भ॒ग । पु॒रः+ए॒ता । भ॒व । इ॒ह ॥ ५ ॥**

अत्र ‘भगवन्तः सियाम’ इति विश्लेषेण केवला त्रिष्टुप् । ‘अस्तु देवास्तेना वयम्’ इत्याथर्वणः पाठः । ‘सर्व इज्जोहवीमि’ इति च ।

हे तत्वदेवाः, प्रथममन्त्रोक्ता अग्न्यादिरुद्रान्ता दश देवा वा । भग एव भगवानस्तु । स एव सर्वगुणाधिकः सर्वोत्तमो नान्य इति मे मतिः सदा जागृताऽस्तु । गुणगुणिनोरभेदाद् भग एव भगवानिति प्रज्ञा च सदा ममास्तु । तेनैव प्रसन्नेन वयं भाग्यवन्तः स्याम । अतः सर्वोऽपि जनः त्वामेवाऽह्वयति पौनःपुन्येनान्यदेवतानामभिरपि । स त्वं भगवन्, नः पुरोगन्ता पूर्वमेवोद्बोधयन् पुरोहितो भव, इह पूजाकर्मणि संसारे वा ॥ ५ ॥

**सम॑ध्व॒रायो॒षसो॑नमन्तदधि॒क्रावे॑व॒शुच॑येप॒दाय॑ ।**
**अ॒र्वा॒ची॒नं॑व॒सु॒वि॒दम्भग॑न्नो॒रथ॑मि॒वाश्वा॑वा॒जिन॒ऽआव॑हन्तु ॥ ६ ॥**



**सम् । अ॒ध्व॒राय॑ । उ॒षसः॑ । न॒म॒न्त॒ । द॒धि॒क्रावा॑+इव । शुच॑ये । प॒दाय॑ ॥ अ॒र्वा॒ची॒नम् । व॒सु॒+वि॒दम् । भग॑म् । नः॒ । रथ॑म्+इव । अश्वा॑ः । वा॒जिनः॑ । आ । व॒ह॒न्तु॒ ॥ ६ ॥**

अत्र प्रथमपादो दशाक्षरः । तुरीयो द्वादशाक्षरः इति संहत्य चतुश्चत्वारिंशदक्षरा केवला त्रिष्टुप् । ‘वसुविदं भगं मे’ इत्याथर्वणः पाठः ।

शुचये पदाय स्थानाय दधिक्रावेव अश्वइव । दधत् क्रामतीति दधिक्रावाऽश्वः । क्रूयते वा । क्रुङ् गतौ । तथोषोदेवताः अध्वराय यज्ञाय सं नमन्ति सङ्गच्छन्ति । यथा पङ्किलात् पावनं पदमश्वो नयति तथा नैशात् तमसो दैनं ज्योतिर्नयन्त्युषस इति । ब्रह्मादीनामप्युषोदेवानां परिग्रहायोषस इति बहुवचनम् । वाजिनो वेगवन्तोऽश्वा रथमिव रथिकं राजानमिव उषसो ब्रह्मादयो देवा भगं न आवहन्तु । कीदृशं भगम्? अर्वाचीनं वसुविदम् । अस्मदभिमुखमागच्छन्तम्, वसूनां लम्भकम् ॥ ६ ॥

**अश्वा॑वती॒र्गोम॑तीर्न॒ऽउ॒षासो॑वी॒रव॑ती॒स्सद॑मुच्छन्तुभ॒द्राः ।**
**घृ॒तन्दुहा॑नावि॒श्वत॒ꣳप्रपी॑तायू॒यम्पा॑तस्व॒स्तिभि॒स्सदा॑नः ॥ ७ ॥**

**अश्व॑+वतीः । गो+म॑तीः । नः॒ । उ॒षसः॑ । वी॒र+व॑तीः । सद॑म् । उ॒च्छ॒न्तु॒ । भ॒द्राः ॥ घृ॒तम् । दुहा॑नाः । वि॒श्वतः॑ । प्र+पी॑ताः । यू॒यम् । पा॒त॒ । स्व॒स्ति+भिः॑ । सदा॑ । नः॒ ॥ ७ ॥**

**इति भाग्यसूक्तं सम्पूर्णम् ॥**

—०—

अत्र तुरीयचरणे ‘सु+अस्तिभिः’ इति विश्लेषेण केवला त्रिष्टुप् ।

भद्राः मङ्गलात्मानः । भदि कल्याणे । उषसो देवताः । नः प्रदातुं अश्ववत्यः प्रतिभाज्ञानयुक्ताः, गोमत्यः वैदिकवाङ्मययुक्ताः, वीरवत्यः वीर्यवदध्ययनोपेतप्रजायुजश्च सत्यः नः सदं सदनमेत्य नैशं तमोऽज्ञानं च उच्छन्तु विनाशयन्तु । उच्छी विवासने । विगततमः कुर्वन्त्वित्येतत् । अथ च हे उषोदेवताः, विश्वतः

सर्वतो गुणैः प्रपीताः प्रपूर्णाः घृतं दीप्तं भगवन्तं अस्मदर्थे दुहाना यूयं स्वस्तिभिः सुस्थितिभिः स्वानन्दैश्च सदा नः पात ॥ ७ ॥

**इदमाचार्यगोविन्दः प्रमृष्टं शब्दतोऽर्थतः ।**
**वितेने विमलं भाष्यं भाग्यसूक्ते भगोदयम् ॥**

**इत्याचार्यगोविन्दस्य कृतिषु भाग्यसूक्तभाष्यं सम्पूर्णम् ॥**

—०—

## आथर्वणं स्वस्तिप्रार्थनासूक्तम् (३.१६)

१–७ अथर्वा। १. अग्निरिन्द्रो मित्रावरुणावश्विनौ भगः पूषा ब्रह्मणस्पतिः सोमो रुद्रः। २–३,५ भग आदित्यः। ४–६ दधिक्रावा अश्वाः। ७. उषाः। त्रिष्टुप्। १. आर्षी जगती। ४. भुरिक् पङ्क्तिः।

(आथर्वणे तृतीयकाण्डे षष्ठप्रपाठकस्य चतुर्थानुवाकस्य प्रथमं सूक्तमिदम्।)

**हरिः ओ३म् ॥**

**प्रातरग्निं प्रातरिन्द्रं हवामहे प्रातर्म्मित्रावरुणा प्रातरश्विना ।**
**प्रातर्भगं पूषणं ब्रह्मणस्पतिं प्रातः सोममुत रुद्रं हवामहे ॥ १ ॥**

**प्रातर्ज्जितं भगमुग्रं हवामहे वयं पुत्रमदितेर्य्यो विधर्त्ता ।**
**आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षीत्याह ॥ २ ॥**

**भग प्रणेतर्भग सत्यराधो भगेमां धियमुदवा ददन्नः ।**
**भग प्र णो जनय गोभिरश्वैर्भग प्र नृभिर्न्नृवन्तः स्याम ॥ ३ ॥**

**उतेदानीं भगवन्तः स्यामोत प्रपित्व उत मद्ध्ये अह्नाम् ।**
**उतोदितो मघवन्त्सूर्य्यस्य वयं देवानां सुमतौ स्याम ॥ ४ ॥**

**भग एव भगवाँ अस्तु देवास्तेना वयं भगवन्तः स्याम ।**
**तं त्वा भग सर्व इज्जोहवीमि स नो भग पुरएता भवेह ॥ ५ ॥**

समध्वरायोषसो नमन्त दधिक्रावेव शुचये पदाय ।
अर्वाचीनं वसुविदं भगं मे रथमिवाश्वा वाजिन आ वहन्तु ॥६॥

अश्वावतीर्गोमतीर्न उषासो वीरवतीः सदमुच्छन्तु भद्राः ।
घृतं दुहाना विश्वतः प्रपीता यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

इत्याथर्वणं स्वस्तिप्रार्थनसूक्तम्

—०—

# ३. कुविदङ्गसूक्तम्



ॐ ॥ **प्राणनारायणौ नत्वा प्राणनारायणस्तवम् ।**
**कुविदङ्गमिदं सूक्तं महार्थं व्याकरिष्यते ॥**

अथातः कुविदङ्गादि इन्द्रवायुसूक्तं व्याख्यास्यामः ।

बाह्वृच्ये सप्तममण्डले एकनवतं सूक्तम् । त्रीणीन्द्रवायुसूक्तानि वसिष्ठदृष्टानि पठ्यन्ते । नवतितमम्, एकनवतम्, द्विनवतं च । तत्र मद्ध्यमं कुविदङ्गम् । तदिह व्याख्यास्यामः ।

तदिदं सप्तर्चं सूक्तम् । मैत्रावरुणस्य वसिष्ठस्याऽर्षम् । त्रिष्टुप् छन्दः । इन्द्रवायू इत्युपेन्द्रसङ्कर्षणौ प्राणनारायणौ वा देवते । अनुक्रमणीकारः पूर्वसूक्ते एवमाह– ‘वायव्यं हि ऐन्द्र्यश्च ता द्विवदुक्ताः’ इति । ‘हि’ इत्यनेन उत्तरं सूक्तत्रयमपि वायुदेवत्यमिति परिभाषितम् । यत्र ‘इन्द्रवायू’ इति द्विवदुक्तिः तास्वृक्षु इन्द्रोऽपि देवतेत्यर्थः ।

बृहद्देवतायां शौनकोऽप्याह–

‘पराणि त्रीणि सूक्तानि वायव्यानि ‘प्र वीरया’ ।
‘तत्रैतास्त्वैन्द्रवायव्याः स्तुतौ यत्र द्विवत् स्तुतिः’ (६.१६) इति ।

‘प्र वीरया, कुविदङ्ग, आ वायो’ इति त्रीणि सूक्तानीत्यर्थः । याज्ञिकानामिन्द्रवायू इति ग्रहे सोमपानार्थमभ्यर्थिताविन्द्रवायू एव । वयं तु मानसयज्ञार्थपराः । नहि वसिष्ठो यागं कुर्वन्नेतान्मन्त्रान् ददर्श । किन्तु ध्यानलीनः । स तदा यमर्थं पश्यन् मन्त्रान् ददर्श स मुख्यार्थो भवति । तस्मादिह इन्द्र इत्युपेन्द्रो भगवान् । वायुरिति सङ्कर्षणः । तदुक्तम्–‘उपेन्द्रः सङ्कर्षणो हरिः’ इति । ततः वायुरिति



मुख्यप्राणः । इन्द्र इति परमेश्वरो नारायणः । तेन मुख्यगुरुपरदेवते स्तुते भवतः ।

तथाचात्र प्रथमतृतीये प्राणस्यर्चौ । अवशिष्टाः पञ्च प्राणनारायणयोरिति । तदनुगुणतया मन्त्रार्थः कथ्यते–

**हरिः ओा३म् ॥**

**कु॒वि॒द॒ङ्गनम॑सा॒येवृ॒धास॑⌣प्पु॒रादे॒वाऽअ॑नव॒द्यास॒ऽआस॑न् ।**
**तेवा॒यवे॒मन॑वेबाधि॒ताया॒वा॑सयन्नु॒षसं॒सूर्य्यैंण ॥ १ ॥**

**कु॒वित् । अ॒ङ्ग । नम॑सा । ये । वृ॒धास॑ः । पु॒रा । दे॒वाः । अ॒न॒व॒द्यास॑ः । आस॑न् ॥ ते । वा॒यवे॑ । मन॑वे । बा॒धि॒ताय॑ । अवा॑सयन् । उ॒षस॑म् । सूर्य्यैंण ॥ १ ॥**

अङ्गेत्यभिमुखीकरणाय प्रीतिसम्बोधनम् । हे अङ्ग सतां प्रिय वायो, वाय्वन्तर्यामिन् सङ्कर्षण वा, कुवित् क्वचिद् रहसि तपोवनादौ ये पुरा साधनदशायाम्, नमसा कायेन नत्वा, वाचा स्तुत्वा, मनसा तव ध्यानेन च वृधासः ज्ञानवृद्धाः सन्तः, अत एव प्राप्तदेवपदाः अनवद्या निर्दोषा आसन् ते । ‘ये आसन् ते देवाः’ इत्यन्वयः । न तु ‘ते वायवे’ इति । उदात्तत्वात् । अङ्ग इति सम्बोधनेन ‘ते॒’ तुभ्यमित्यनुदात्तं पदमध्याहर्तव्यम् । मनवे सर्वज्ञाय । बाधा संसारपीडा । तद्वन्तो बाधिनः । तैः शरणार्थमितो बाधीत एव बाधितः । तस्मै बाधिताय वायवे सङ्कर्षणाय च । तमुद्दिश्य उषसं स्वबुद्धिमवासयन्, तस्मिन् निहितवन्त इत्यर्थः । ओषति प्रकाशयति प्रमेयजातमित्युषा बुद्धिः । सूर्येण सह । सूर्य-मुद्दिश्य च स्वबुद्धिमवासयन्नित्यर्थः । इदमुक्तं भवति–वायुं गुरुत्वेन मनसि दध्युः । वाय्वन्तर्गतं सूर्यान्तर्गतं च गायत्रीप्रतिपाद्यं भगवन्तं दैवतत्वेन दध्युरिति । व्याख्याता चेयमृक् तत्वप्रदीपे–‘पुरा क्वचिद् ये नमस्कारादिना वृद्धाः सन्तो देवा रागाद्यवद्यशून्या आसन् ते वायवे ज्ञानिने बाधिभिः शरणार्थमितायावासयन् स्वबुद्धिं सूर्येण सह । ‘उष प्रकाशने’ इति

धातोर्बुद्धिरुषःशब्दोक्ता। वायुमुद्दिश्य बुद्धिमवासयन्नित्यर्थः' (ब्र.सू.१.३.२४) इति। एतेन श्रुतमपहाय 'बाधितानां पुत्रादीनां रक्षणार्थम्' इत्युन्मन्त्रं व्याख्यान्तः परास्ताः। 'बाधिताय+अवासयन्' इत्येकाक्षरीभावस्य व्यूहेन, 'सूरियेण' इति क्षैप्रप्रव्यूहेन च तुरीयचरणस्य त्रिष्टुप्त्वम् ॥ १ ॥

**उ॒शन्ता॑दू॒तानदभा॑यगो॒पामा॒सश्च॑पा॒थश्श॒रद॑श्चपू॒र्वीः ।**
**इन्द्र॑वायूसुष्टु॒तिर्वा॑मिया॒नामा॑र्डी॒कमी॑ट्टेसुवि॒तश्च॒नव्य॑म् ॥ २ ॥**

**उ॒शन्ता॑ । दू॒ता । न । दभा॑य । गो॒पा । मा॒सः । च॒ । पा॒थः । श॒रदः॑ । च॒ । पू॒र्वीः ॥ इन्द्र॑वायू॒इति॑ । सु॒+स्तु॒तिः । वा॒म् । इ॒या॒ना । मा॒र्डी॒कम् । ई॒ट्टे॒ । सु॒वि॒तम् । च॒ । नव्य॑म् ॥ २ ॥**

हे इन्द्रवायू, हे नारायण, हे प्राण, वष्ट इत्युशन्तौ भक्तानां विशिष्य स्वस्य वसिष्ठस्य स्तुतिं स्वीचिकीर्षन्तौ। वश कान्तौ। कान्तिरिच्छा। दवत इति दूतौ धावमानौ गजेन्द्रस्येव भक्तानां रक्षणाय। दु गतौ। आगत्य च गोपौ रक्षितारौ भवतम्। दभाय न भवतं पराभवाय। एवं पूर्वीः अतीताः शरदः संवत्सरान् मासः मासांश्च पाथः अपातम्। एवं भाविनीः शरदः मासांश्च पातम्। वामियाना गच्छन्ती विषयीकुर्वन्ती इयं सुष्टुतिः अपौरुषेयतया निर्दुष्टा, गुरुदेवताविषयतया रमणीया च स्तुतिः। मृडीकं रक्षणम्। 'मृड रक्षे' इति प्राचीनम्। मृडः कीकन् प्रत्ययः (द.पा.१०.११)। मृडीकमेव मार्डीकम्। रक्षणमुद्दिश्य ईट्टे स्तौति भवन्तौ। न केवलम् नव्यं प्रशस्तं सुवितं सुपथे पतितुं प्रेरणं चोद्दिश्य स्तौति। अनयाऽस्मत्कृतया स्तुत्या अस्मान् साधौ साधनमार्गे प्रेरयतम्, मध्येमार्गं सम्भावितेभ्यः प्रत्यूहेभ्यो रक्षणं च दत्तमिति ॥ २ ॥

**पीवो॑ऽअन्ना॑ँरयि॒वृध॑स्सुमे॒धाश्श्वे॒तस्सि॑षक्तिनि॒युता॑मभि॒श्रीः ।**
**तेवा॒यवे॒सम॑नसो॒वित॑स्तस्थु॒र्वि॑श्वे॒न्नर॑स्स्वप॒त्यानि॑चक्रुः ॥ ३ ॥**



**पीव॑ः+अन्नान् । र॒यि॒+वृधः॑ । सु॒+मे॒धाः । श्वे॒तः । सि॒स॒क्ति॒ । नि॒+युता॑म् । अ॒भि॒+श्रीः ॥ ते । वा॒यवे॑ । स+म॑नसः । वि । त॒स्थु॒ः । विश्वा॑ । इत् । नर॑ः । सु+अ॒प॒त्यानि॑ । च॒क्रु॒ः ॥ ३ ॥**

पीवः पीवरं समृद्धं अन्नं येषां तान् पीवोअन्नान्। अन्नमिति ज्ञानरतिरुच्यते। 'अन्नं ज्ञानरसान्नं च बाह्यमन्नमिति द्विधा। ज्ञानान्नं ज्ञानबलतः श्रेष्ठं ज्ञानरतिर्हि तत्' इति हि स्मरन्ति। युक्तिसाहित्यं ज्ञानस्य बलम्। तेन ज्ञाने रतिर्ज्ञानान्नम्। निरन्तरं ज्ञानयोगे निरतानिति यावत्। अत एव रय्या ज्ञानाख्यसम्पदा वृधो वृद्धास्तान्। यस्य बुद्धिर्भगवति धारणावती स सुमेधाः। निरन्तरं भगवन्निष्ठमतिः। सर्वविषयतया सु शोभना मेधाऽस्येति सुमेधाः सर्वज्ञो वा, श्वेतः वायुः। परशुक्लत्रयान्तर्भूतत्वात्। 'श्वा श्वेतः प्रादुर्बभूव' इति श्रुतेश्च। सिषक्ति प्रीत्या सेवते। कीदृशः श्वेतः? नियुतामभिश्रीः। नियुवन्तीति नियुतः। यु मिश्रणे। विविधविषयविषसक्ता मनोवृत्तयः। तासामभिश्रयणीयः। विषयसक्तिं विहाय यदाश्रयणे तासामपि भगवति धारणात्। ते येषु वायुः सक्तः, ये च ज्ञानवृद्धास्ते वायोः जीवोत्तमत्वे हरेः सर्वेत्तमत्वे च समानमनसः। वायवे तमुपस्थातुम्, तत्प्रीणनाय तदनुग्रहाय च, वि तस्थुः। इतरेभ्यो विलक्षणा विशिष्टाः तस्थुः। विधाने तस्थुः। विहिते कर्मणि रता इत्यर्थः। वि विद्यायां तस्थुः। ज्ञानपूर्वं कर्मकर्तार इत्यर्थः। 'यदेव विद्यया करोति' इत्यादेः। वि विष्णौ तस्थुः। वैष्णवा बभूवुरित्यर्थः। एवं नयन्तीति नरः लोकस्य नेतारः ज्ञानिनः साधकाः विश्वानि कर्माणि स्वपत्यानीत् स्वपत्यान्येव चक्रुः। किमुक्तं भवति? सु न पतन्त्येभिरिति स्वपत्यानि ज्ञानसाधनानि सात्विककर्माण्येव चक्रुरिति। विश्वस्य इमानि विश्वानीति वा। विष्णोर्वायोश्च प्रीतिकराणीत्यर्थः। 'तत् कर्म हरितोषं यत् सा विद्या तन्मतिर्यया' इत्यादेः। अत्रापि हरिरिति विष्णुश्च वायुश्च। अत्र 'सु+अपत्यानि' इति विश्लेषेण छन्दःपूर्तिः ॥ ३ ॥

**यावत्तरस्तन्वो३यावदोजोयावन्नरश्चक्षसादीध्यानाः ।**
**शुचिंसोमंशुचिपापातमस्मेऽइन्द्रवायूसदतम्बर्हिरिदम् ॥ ४ ॥**

**यावत् । तरः । तन्वः । यावत् । ओजः । यावत् । नरः । चक्षसा । दीध्यानाः ॥ शुचिम् । सोमम् । शुचि+पा । पातम् । अस्मेइति । इन्द्रवायू-इति । सदतम् । बर्हिः । आ । इदम् ॥ ४ ॥**

यावत् तन्वः तन्वाः अस्य साधनशरीरस्य तरः कर्मकरणशक्तिः, यावत् ओजः प्रत्यूहप्रतिरोधशक्तिः, यावच्च नरः ज्ञानसाधकाः अस्मदादयः चक्षसा ज्ञानेन दीध्याना दीप्यमानाः क्रीडन्तो वा । वादो हि ज्ञानक्रीडा । दीधीङ् दीप्ति-देवनयोः । अनुपहतज्ञानशक्तयः, ज्ञानरता इत्येतत् । तावत् शुचि भवद्विषयतया शुचि शुद्धं ज्ञानं कर्म च पिबतः प्रीत्या स्वीकुरुत इति, पातः रक्षत इति वा शुचिपौ हे इन्द्रवायू, अस्मे अस्मदीयमिमं शुचिं सोमं भक्तिपूर्णं मनः, बाह्ययज्ञे सोमरसं वा, पातं पिबतम्, स्वीकरणेन रक्षतमिति वा । तदर्थमिदं बर्हिः कुशासनमा सदतम् आसीदतम् । अन्तर्यज्ञे बर्हिः बृहत् विशालं हृदयपीठं च । 'हे इन्द्रवायू, युवयोः तन्वः शरीरस्य तरः वेगः यावदस्ति, यावच्च ओजः बलम्' इत्यद्भुतं व्याख्यानम् । 'नरः' इत्युत्तरत्र श्रवणात् नृणां तनोस्तर ओजः इति स्फुटं प्रतीयमानमर्थं विहाय किमिति युवयोरित्यध्याजहार? अपजहार च सहजमर्थम् । नूनं देवद्विषामीदृशा एवार्थाः प्रतिभासन्ते । दृष्टापलापिनो हि ते । अत्र 'तनुवः' इति, 'दीधियानाः' इति च क्षैप्रविश्लेषेण छन्दःपूर्तिः ॥ ४ ॥

**नियुवानानियुतस्पार्हवीराऽइन्द्रवायूसरथंय्यातमर्वाक् ।**
**इदंहिवाम्प्रभृतम्मध्वोऽअग्रमधप्रीणानाविमुमुक्तमस्मे ॥ ५ ॥**

**नि+युवाना । नि+युतः । स्पार्ह+वीराः । इन्द्रवायूइति । स+रथम् । यातम् । अर्वाक् ॥ इदम् । हि । वाम् । प्र+भृतम् । मध्वः । अग्रम् । अध । प्रीणाना । वि । मुमुक्तम् । अस्मेइति ॥ ५ ॥**



हे इन्द्रवायू, भगवद्विषयत्वेन स्पार्हाः स्पृहणीयाः ध्यानयोगे वीराः सामर्थ्यवतीः नियुतः मनोवृत्तीः अश्वानिव अस्मच्छरीराख्ये रथे नियुवानौ योजयन्तौ, प्रेरयन्ताविति यावत्, युवामुभावपि सरथं साधकशरीराख्यं समानं रथं अर्वाक् अधस्तादस्यां पृथिव्यां यातं प्रविशतम् । किमर्थं प्रवेष्टव्यम्? यतोऽत्र गात्रे हृदयाख्यपात्रे मध्वः मधुरस्य भक्तिरसस्य अग्रं आद्यं पेयं इदं वां युवयोरेव हि सम्भृतं सङ्गृह्य स्थापितम् । तत्पानार्थमायातम् । 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ' इति हि श्रुतिः । पीत्वा च प्रीणानौ प्रीयमाणौ अस्मान् अस्मात् संसारात् विमुमुक्तम् विमोचयतमिति । अथ मन्त्रद्रष्टा वसिष्ठः भाविनमर्थं स्मरन्निवाऽह– इदं हि । मध्व इतीदं हि वां युवयो अग्रं श्रेष्ठं प्रभृतं प्राभृतं साधकानामुपायनम् । मध्व इति अग्रं अग्रे अन्ते जातं वायोस्तृतीयं रूप-मिति वा । अथ प्रीणानौ मध्वमाधवौ विमोचयतमस्मानिति । अधेति तृतीयोऽ-तिशये । अतिशयश्चावधारणरूपः । अध अथैव तस्मादेव । अथ प्रवेशानन्तर-मेवेति चार्थः । 'समग्रे बाह्वृच्ये सप्ताशीतिस्थकारेण, अन्यत्र धकारेण' इति सम्प्रदायः । अयमत्र विशेषः– यत्रान्तस्थो नारायण उपास्यते तत्र थकारः 'अथ' इति । यत्र बहिर्धारयन् नारायण उपास्यते तत्र धकारः–'अध' इति । पुनरकारेण सम्पुटीकरणे दोषाणामभावोऽन्यत्वं चार्थः–'अथा' इति 'अधा' इति । उकारः शिरसि चेत् सर्वोत्तमत्वमर्थ इत्यलं रहस्याविष्करणेन ॥ ५ ॥

**यावांशतन्नियुतोयास्सहस्रमिन्द्रवायूविश्ववारास्सचन्ते ।**
**आभिर्य्यातंसुविदत्राभिरर्वाक्पातन्नराप्रतिभृतस्यमध्वः ॥ ६ ॥**

**या । वाम् । शतम् । नि+युतः । याः । सहस्रम् । इन्द्रवायूइति । विश्व+वाराः । सचन्ते ॥ आ । आभिः । यातम् । सु+विदत्राभिः । अर्वाक् । पातम् । नरा । प्रति+भृतस्य । मध्वः ॥ ६ ॥**

हे इन्द्रवायू, विश्वं विष्णुं वायुं च वरयन्तीति विश्ववाराः विष्णुवायुविषयाः, याः शतं याश्च सहस्रं नियुतः । शतं सहस्रमिति बहुत्ववचनम् । भाषायां 'नूरारु,

साविरारु' इतिवत्। शताधिकाः, सहस्राधिकाः, असङ्ख्या इति यावत्। नियुतश्चित्तवृत्तयः, तदभिमानिन्योऽवान्तरदेवता इत्येतत्, वां युवां सचन्ते सेवन्ते। ताभिः सह अर्वाक् अवस्तात् मत्सकाशम् आयातम्। भवदनुग्रहेण मच्चित्तवृत्तयोऽपि विष्णुवायुप्रवणा भवन्तु। कीदृशीभिस्ताभिः? सुविदत्राभिः। विशिष्टसुखदात्रीभिः। वैशिष्ट्यं च दुःखासम्भिन्नत्वम्। अथ च सुखरूपं विष्णुं दत्वा त्रात्रीभिः। तदर्थमर्वागागत्य, हे नरौ जीवजातनेतारौ, प्रतिभृतस्य हृदि प्रतिष्ठापितस्य मध्वः मधुरस्य भक्तिरसस्य, द्वितीयार्थे षष्ठी, भक्तिरसं पातं पिबतमिति। अथच वायोरवतारान् ज्ञापयन्निव वेदपुरुष आह– पातं नरा प्रतिभृतस्य मध्वः। प्रतिभृतस्य, भगवत्प्रतीकं हृदि भृतं येन तस्य प्रतिभृतस्य। द्वितीयार्थे षष्ठी, प्रतिभृतं भगवद्भक्तम्, हे नरौ नृलोके अवतीर्णौ नरोत्तमस्य प्रथमावतारौ हनुमद्भीमसेनौ युवां पातम्, तथा मध्वश्च पात्विति। बाह्वृच्ये संहत्याष्टाशीतिकृत्वः मध्वशब्दः पठ्यते। सर्वत्रापि सोमपरतयेव मध्वपरतयाऽपि शक्यमनुसन्धातुम्। पवमानो हि सोमः ॥ ६ ॥

**अर्वन्तोनश्रवसोभिक्षमाणाऽइन्द्रवायूसुष्टुतिभिर्वसिष्ठाः ।**
**वाजयन्तस्स्ववसेहुवेमयूयम्पातस्वस्तिभिस्सदानः ॥ ७ ॥**

**अर्वन्तः । न । श्रवसः । भिक्षमाणाः । इन्द्रवायूइति । सुस्तुति+भिः । वसिष्ठाः ॥ वाज+यन्तः । सु । अवसे । हुवेम । यूयम् । पात । स्वस्ति+भिः । सदा । नः ॥ ७ ॥**

**॥ इति कुविदङ्गसूक्तं सम्पूर्णम् ॥**

मन्त्रोऽयं पूर्वसूक्तान्तेऽपि (९०.७)पठ्यते। 'यूयं पात स्वस्तिभिः सदा नः' इति त्रिष्वपि सूक्तेषु (९०.९१,९२)। अर्वन्तो न अश्वा इव, कुत्सिता नरा इव वा संसारधुरां वहन्तः। 'अवद्य-अवम-अर्व-रेफाः कुत्सिते' (१०.२०) इति दशपादिका। श्रवसः ज्ञानस्य। षष्ठी द्वितीयार्थे। ज्ञानं भिक्षमाणा याचमानाः। वाजयन्तः अज्ञानाद्यरिभिर्योधयन्तः। वसिष्ठोऽहम्। बहुवचन-



माद्यर्थे। वसतामुत्तमा अन्ये चर्षयः। हे इन्द्रवायू युवां सुस्तुतिभिः स्ववसे निरन्तररक्षायै हुवेम आह्वयेम। अन्ते स्फुटमवतारत्रयमपि प्रार्थयन्नुपसहंरति वायुसूक्तत्रयमपि –यूयं पात। हे इन्द्रावताराः रामकृष्णवेदव्यासाः, हे वाय्ववताराः हनुमद्भीममध्वाः, यूयं स्वस्तिभिः सन्ततसौख्यैः सदा नः पातेति ॥ ७ ॥

**इदमाचार्यगोविन्दः प्रमृष्टं शब्दतोऽर्थतः।**
**वितेने विमलं भाष्यं विनेयजनवाञ्छया॥ ※ ॥**

**इत्याचार्यगोविन्दस्य कृतिषु कुविदङ्गसूक्तभाष्यं सम्पूर्णम् ॥**

—०—

ॐ ॥ **नत्वा रामं कृष्णं कृष्णद्वैपायनं च मधुवचनम् ।**
**मतिमथ पृक्षं मध्वं व्याचिख्यासामि तत्सूक्तम् ॥**

अथातो नासत्यसूक्तं व्याख्यास्यामः ।

आ मे हवमिति नवर्चमष्टममण्डले पञ्चाशीतं सूक्तम् । कृष्णस्याऽङ्गिर-सस्यार्षम् । गायत्री छन्दः । अश्विदेवताकमित्यनुक्रमणिकायाम्–'आ मे कृष्ण आश्विनं हि' इति । शौनकोऽप्याह बृहद्देवतायाम्–'त्रीण्याश्विनान्या म इति' इति । कृष्णो नामायमृषिश्छान्दोग्ये उल्लिखितो घोरशिष्य एव स्यात् । यो भगवान् वासुदेव इव देवकीमातृकः । देवता तु का स्यात्? ननूक्तमश्विना-विति । तदनुक्तमपि ज्ञायते श्रुतिश्रवणमात्रेण । किन्त्वश्विनाविति श्रुतेर्भगवत्परतायां कावुच्येते? कृष्णरामाविति ब्रूमः । 'कृष्णरामौ तथाऽश्विनौ' इति स्मरणात् । कृष्णस्तावदर्जुनसारथ्येनाश्वी । रामः स्वयं क्षत्रियत्वाद-श्वरथः । यो वनं प्रस्थितः गुहराज्ये स्वयमखादन् प्रीत्याऽश्वान् खादयामास– 'अश्वानां खादनेनाहमर्थी नान्येन केनचित्' इति । एवं मधुरवचनो मध्वो बादरायणः । यस्याऽस्यकमलगलितं वाङ्मयममृतम् । अथ गुरुस्तुतिश्चेयम् । अश्विनाविति हनुमान् भीमसेनश्च । मध्व इति स्फुटम् । कथमश्विनौ? लङ्कां प्रत्याशु वानाद् गतेरश्वी हनुमान् । कौरवसेनां प्रत्याशु वानादश्वी भीम-सेनः । तथाचाश्विनाविति रामकृष्णौ तद्दासावाञ्जनेयभीमसेनौ चोच्येते । मध्व इति बादरायणानन्दतीर्थौ । 'मध्वः मधुरस्य सोमस्य पीतये अश्विनौ प्रार्थ्येते' इति याज्ञिकैरुच्यमानोऽप्यर्थः सम्मत एवास्माकम् । तथाऽपि 'त्रयोऽर्थाः सर्ववेदेषु' इत्यर्थान्तरान्वेषणपरा वयम् । यन्मानसयाजिनामनुसन्धेयं भवति ।



तत्र बलकार्यावश्विनाविति सहोक्तौ । ज्ञानकार्यो मध्व इति पृथगुक्तिः । तथाच त्रिरूपः भगवान् त्रिरूपश्च गुरुर्नवभिर्मन्त्रैः प्रस्तूयेते –

**हरिः ओ३म् ॥**

**आमेहवंन्नासत्याश्विनागच्छंतंय्युवम् ।**
**मध्वस्सोमंस्यपीतयें ॥ १ ॥**

**आ । मे । हवंम् । नासत्या । अश्विना । गच्छंतम् । युवम् ॥**
**मध्वंः । सोमंस्य । पीतयें ॥ १ ॥**

'नासत्यौ नैव चासद्गुणौ क्वचित्' इत्यृग्भाष्ये । तेन असत्यौ असाधुगुणौ न भवत इति नासत्यौ । हे अश्विनौ रामकृष्णौ हनुमद्भीमसेनौ च, युवं युवां मे हवमाह्वानं आकर्णयत । आकर्ण्य चाऽगच्छतम् । एवं मध्वः बादरायण आनन्दतीर्थश्च मे हवमाकर्ण्य आगच्छतु । किमर्थम्? मम सोमस्य भक्तिसम्भृतस्य मनसः पीतये भक्तिरसपानार्थम् । पीत्वा 'पातवे' च । उक्तं च कुविदङ्गभाष्येऽस्माभिः –'बाह्वृच्येऽष्टाशीतिकृत्वो मध्वशब्दः पठ्यते । सर्वत्रापि सोमपरतयेव मध्वपरतयाऽपि शक्यमनुसन्धातुम् । पवमानो हि सोमः' इति । 'नासतिया+अश्विना' इति विश्लेषेण केवलाऽनुष्टुप् ॥ १ ॥

**इमम्मेस्तोमंमश्विनेमम्मेंशृणुतंहवंम् ।**
**मध्वस्सोमंस्य पीतयें ॥ २ ॥**

**इमम् । मे । स्तोमंम् । अश्विना । इमम् । मे । शृणुतम् । हवंम् ॥**
**मध्वंः– ॥ २ ॥**

इमं मे स्तोमं स्तवं शृणुतम् । इमं मे हवमाह्वानं च । मध्वश्च स्तोमं हवं च शृणोतु । श्रुत्वाऽऽगच्छतु सोमस्य पीतये । अत्र 'स्तोममश्विना+इमं मे' इति विश्लेषेण केवलाऽनुष्टुप् ॥ २ ॥

**अ॒यंवा॑ङ्कृ॒ष्णो॑ऽअश्विना॒हव॑तेवाजिनीवसू ।**
**मध्व॒स्सोम॑स्यपी॒तये॑ ॥ ३ ॥**

**अ॒यम् । वा॒म् । कृ॒ष्णः॑ । अ॒श्वि॒ना॒ । हव॑ते । वा॒जि॒नी॒व॒सू॒इति॑वाजिनी+वसू ॥ मध्वः॑– ॥ ३ ॥**

'अन्नवत्त्वाद् वाजिनी वाक्' इत्यृग्भाष्ये । वाजमन्नम् । बाह्यमन्नदात्री अध्यात्मं ज्ञानरतिदात्री, वादाख्यज्ञानयुद्धदात्री वाक् वाजिनी । तत्र वाच्यतया वसत इति वाजिनीवसू । हे अश्विनौ, अयं कृष्णो नामर्षिः, भवद्गुणैराकृष्टः स्तोता वां हवते आह्वयन्नस्ति । आगच्छतम् । मध्वश्चाऽगच्छतु ॥ ३ ॥

**शृ॒णु॒तञ्ज॑रि॒तुर्हव॒ङ्कृष्ण॑स्यस्तुव॒तोन॑रा ।**
**मध्व॒स्सोम॑स्यपी॒तये॑ ॥ ४ ॥**

**शृ॒णु॒तम् । ज॒रि॒तुः । हव॑म् । कृष्ण॑स्य । स्तु॒व॒तः । न॒रा॒ ॥ मध्वः॑– ॥ ४ ॥**

जरितुः स्तावंस्तावं प्राप्तवृद्धत्वस्य, सम्प्रत्यपि स्तुवतः कृष्णस्य मन्त्रद्रष्टुः, भवद्गुणाकृष्टस्य स्तोतुर्वा, हवमाह्वानं शृणुतं हे नरौ जीवजातनेतारौ । शृणोतु मध्वश्च । पूर्वौ साक्षात्कुर्वन् भाविनं मध्वं परोक्षत एव स्तौति ॥ ४ ॥

**छ॒र्दिर्य॑न्त॒मदा॑भ्यं॒विप्रा॑यस्तुव॒तेन॑रा ।**
**मध्व॒स्सोम॑स्यपी॒तये॑ ॥ ५ ॥**

**छ॒र्दिः । य॒न्त॒म् । अदा॑भ्यम् । विप्रा॑य । स्तु॒व॒ते । न॒रा॒ ॥ मध्वः॑– ॥ ५ ॥ १ ॥**

**॥ इति प्रथमो वर्गः ॥**



हे नरौ नेतारावश्विनौ, वां स्तुवते विप्राय अदाभ्यं अन्यैर्नाशयितुम-शक्यं छर्दिः शत्रुसन्दीपनमात्मतेजः यन्तं प्रयच्छतम् । छृदी सन्दीपने । छर्दयतीति छर्दिः । मध्वश्च प्रयच्छतु । 'अदाभियम्' इति विश्लेषेण छन्दःपूर्तिः ॥ ॥ ५ ॥ १ ॥

**गच्छ॑तन्दा॒शुषो॑गृ॒हमि॒त्थास्तु॑व॒तोअ॑श्विना ।**
**मध्व॒स्सोम॑स्यपी॒तये॑ ॥ ६ ॥**

**गच्छ॑तम् । दा॒शुषः॑ । गृ॒हम् । इ॒त्था । स्तु॒व॒तः । अ॒श्वि॒ना॒ ॥ मध्वः॑– ॥ ६ ॥**

हे अश्विनौ, इत्थं वां स्तुवतः, दाशुषः सर्वं स्वं भवतोः समर्पयतः, गृहं हृदयाख्यमागच्छतम् । मध्वश्चाऽगच्छतु ॥ ६ ॥

**यु॒ञ्जाथां॒रास॑भं॒रथे॑वी॒ड्व॑ङ्गेवृषण्वसू ।**
**मध्व॒स्सोम॑स्यपी॒तये॑ ॥ ७ ॥**

**यु॒ञ्जाथा॑म् । रास॑भम् । रथे॑ । वी॒ळु+अ॑ङ्गे । वृ॒ष॒ण्व॒सू॒इति॑वृषण्+वसू ॥ मध्वः॑– ॥ ७ ॥**

अश्विनो रथं रासभो वहतीति याज्ञिकानां मतम् । अनुमतं तदपि । अस्माकं त्वन्य एव रासभो भवति । 'वीळु' इति दृढमुच्यते । वीड्वङ्गे दृढावयवे साधन-समर्थे अस्मच्छरीराख्ये रथे रासभं युञ्जाथां योजयतम् । कोऽयं रासभः? रासः वाङ्मयम् । रासृ शब्दे । रासेन भातीति रासभं यथार्थज्ञानं भगवद्विषयम् । तेन युञ्जाथाम् । हे वृषण्वसू अश्विनौ । वसु ज्ञानरूपां सम्पदं वर्षत इति वृषण्वसू । एवं रासभयुक्ते रथे सोमस्य पीतये मध्व आगच्छतु बादरायणश्चाऽ-नन्दतीर्थश्च ॥ ७ ॥

त्रिवन्धुरेणत्रिवृतारथेनायातमश्विना ।
मध्वस्सोमस्यपीतये ॥ ८ ॥

त्रि+वन्धुरेण । त्रि+वृता । रथेन । आ । यातम् । अश्विना ॥
मध्वः– ॥ ८ ॥

त्रिभिर्गुणैः सत्वरजस्तमोभिः बन्धुरेण नतोन्नतेन, त्रिवृता पृथिव्यप्तेजोमयेन अनेन शरीराख्येन रथेन, रथमधिष्ठाय हृदयाख्यं गृहमायातमश्विनौ । तदर्थं मध्वश्चाऽयातु सोमस्य पीतये ॥ ८ ॥

नूमेगिरोनासत्याश्विनाप्रावतँय्युवम् ।
मध्वस्सोमस्यपीतये ॥ ९ ॥

नु । मे । गिरः । नासत्या । अश्विना । प्र । अवतम् । युवम् ॥
मध्वः– ॥ ९ ॥ २ ॥

**॥ इति द्वितीयो वर्ग्गः ॥**

**॥ इति नासत्यसूक्तं सम्पूर्णम् ॥**

येषां वचनम्, यैः सृष्टं जगद् वा काप्यसत्यं न भवति तौ नासत्यौ । हे अश्विनौ, युवां नु अद्य । संहितायां दैर्घ्यमवधारणार्थे । अद्यैव मे इमाः स्तुतिरूपा गिरः स्वीकरणेन प्रावतं रक्षतम् । मध्वश्च सोमस्य पीतये पातवे चाऽयातु ॥ ९ ॥

**इदमाचार्यगोविन्दः प्रमृष्टं शब्दतोऽर्थतः ।**
**वितेने विमलं भाष्यं गुरुदेवप्रसादतः ॥**

**इत्याचार्यगोविन्दस्य कृतिषु नासत्यसूक्तभाष्यं सम्पूर्णम् ॥**

—०—

# ५. अपालासूक्तम्



ॐ ॥ **अपाला यत्कृपालापादाप लावण्यमीप्सितम् ।**
**स ददातु ममापीषत् प्रावण्यं श्रुतिचिन्तने ॥ ❋ ॥**

**त्वग्दोषं च मनोदोषं विधूय सुखदायिनौ ।**
**इन्द्रप्रतीके महितौ प्राणनारायणौ स्तुमः ॥ ❋ ॥**

अथातोऽपालासूक्तं व्याख्यास्यामः ।

तदिदं सूक्तमष्टमे मण्डले पठ्यते, 'कन्या वाः–' (ऋ.सं.८.९१) इति सप्तर्चम् । अपालाऽऽत्रेयी ऋषिका । आद्ये पङ्क्ती । शिष्टा अनुष्टुभः । इन्द्रप्रतीकौ प्राणनारायणौ देवते ।

तथाह्यनुक्रमणिकाकारः–'कन्या वाः, सप्त, आत्रेय्यपाला, इतिहास ऐन्द्रः, आनुष्टुभं द्विपङ्क्त्यादि' इति । आत्रेयी अपाला तरुणी ऋषिका । ऐन्द्र इतिहासः अत्रोच्यत इत्यर्थः । तं चेतिहासमाह षड्गुरुशिष्यः–

'अपालाऽत्रिसुता त्वासीत् कन्या त्वग्दोषिणी पुरा ।
'अत एवं दुर्भगेति भर्त्रा त्यक्ता सती पथि ॥

'सौम्याद् रसादिन्द्रतृप्तिरिति यज्ञस्य वाक्श्रुतेः ।
'अन्विच्छन्ती सोमलतां जलायावातरत् तदा ॥

'सोममप्यविदत् कन्याऽथाभ्यागात् पितुराश्रमम् ।
'तमिन्द्रश्चकमे दृष्ट्वा विजने पितुराश्रमे ॥

'तपसा बुबुधे सा तु सर्वमिन्द्रचिकीर्षितम् ।
'सुषाव स्वमुखे सोमं स्वदन्तैर्ग्रावभिस्त्विति ॥



'तस्या भक्त्यतिरेकेण पपाविन्द्रश्च तन्मुखात् ।
'निरगात् स क्वचित् पूर्वं भक्षयित्वा गृहान्मुनेः ॥

'उदकुम्भं समादाय तेन सार्धं तु साऽप्यगात् ।
'ऋग्भिः स्तुत्वा जगादेन्द्रं कुरु मां सुत्वचं त्विति ॥

'रथच्छिद्रे गतामिन्द्रः शकटस्य युगस्य च ।
'प्रक्षिप्य निश्चकर्ष त्रिः सुत्वक् सा तु ततोऽभवत् ॥

'तस्याः पूर्वहता या त्वग्जातिः सा शल्यकोऽभवत् ।
'उत्तरा त्वभवद् गोधा कृकलासस्तथोत्तमा' इति ।

बृहद्देवतायां शौनकश्चैवमेवाऽह–

'अपालाऽत्रिसुता त्वासीत् कन्या त्वग्दोषिणी पुरा ।
'तामिन्द्रश्चकमे दृष्ट्वा विजने पितुराश्रमे ॥

'तपसा बुबुधे सा तु सर्वमिन्द्रचिकीर्षितम् ।
'उदकुम्भं समादाय अपामर्थे जगाम सा ॥

'दृष्ट्वा सोममपामन्ते तुष्टावर्चा वने तु तम् ।
'कन्या वारिति चैतस्यामेषोऽर्थः कथितस्ततः ॥

'सा सुषाव मुखे सोमं सुत्वेन्द्रं चाऽजुहाव तम् ।
'असौ य एषीत्यनया पपाविन्द्रश्च तन्मुखात् ॥

'अपूपांश्चैव सक्तूंश्च भक्षयित्वा स तद्गृहात् ।
'ऋग्भिस्तुष्टाव सा चैनं जगादैनं तृचेन तु ॥

'सुलोमामनवद्याङ्गीं कुरु मां शक्र सुत्वचम् ।
'तस्यास्तद् वचनं श्रुत्वा प्रीतस्तेन पुरन्दरः ॥

‘रथच्छिद्रेण तामिन्द्रः शकटस्य युगस्य च ।
‘प्रक्षिप्य निश्चकर्ष त्रिः सुत्वक् सा तु ततोऽभवत् ॥

‘तस्यास्त्वगपहता या पूर्वा सा शल्यकोऽभवत् ।
‘उत्तरा त्वभवद् गोधा कृकलासस्त्वगुत्तमा ।
‘इतिहासमिदं सूक्तमाहतुर्यास्कभागुरी’ इति ॥

नास्माकमत्र भरः । एतत् सूक्तमधिकृत्य कश्चनार्वाचीन इतिहासोऽत्र मुख्यो भवति । शालिवाहनशकस्य द्वादशशतकान्ते प्रवृत्तेयं कथा । कदाचिदाचार्यमध्वो यात्रामध्ये सम्प्रति ‘चेम्नाडु’ (ಚೆಮ್ನಾಡು) इति व्यवह्रियमाणे, तदात्वे ‘शम्भुनाडु’ इति प्रथिते ग्रामे शम्भुलिङ्गेश्वरदेवमन्दिरे निवसति स्म । तत्र निर्वृत्तेयं घटनेति वदन्ति । तथाहि श्रीमध्वविजये–

‘कन्यकाहृतसुरेन्द्रवपुःश्रीदानवाचिवरसूक्तहृदुक्तौ ।
‘कुत्रचित् सदसि तावदपाला कीर्तिताऽतितरुणीत्ययमूचे ॥

‘श्वित्रिणी भवति तत्पदवाच्येत्याग्रहेण वदतो विदुषोऽत्र ।
‘कश्चिदेष्यति विपश्चिदिहैनं पृच्छतेत्ययमगच्छदथोक्त्वा ॥

‘देशमेनमचिरादुपयातस्तादृशाकृतिरहो कृतबुद्धिः ।
‘तांस्तथाऽभ्यधित तत्पदभावं सूरिमौलिमणिनाऽत्र यथोचे’
(म.वि.६.१७–९) इति ॥

अयमिहेतिवृत्तसङ्ग्रहः– शम्भुलिङ्गेश्वरदेवमन्दिरे विद्वत्सभा प्रावर्तत । तत्र प्रवचनमध्ये प्रसङ्गवशात् परिषदा ‘अपालासूक्तार्थ उच्यताम्’ इति पृष्टः, अपालासूक्तं विवृण्वान आचार्यः ‘अपाला इत्यस्यातितरुणीत्यर्थः’ इत्याह । कथम्? अप+अल्यते अपवार्यते स्वाच्छन्द्यादित्यपाला नवयौवना । ‘अलच् निवारणे’ इति काशकृत्स्नः । अपगतालम्बुद्धिर्वा अपाला । अतिकामिनी हि नवयौवना भवति । इयं चातृप्तकामेत्युत्तरत्र मन्त्रेषु स्फुटम् ।



अपूर्वमिदमर्थविवरणं श्रुत्वा तत्र मिलिता विद्वांसो विवदमाना बभूवुः । त आचचक्षिरे–‘अश्रुतपूर्वोऽयमर्थः । न वेदसम्प्रदायविद्भिरुदितः । नापि निघण्टुकारैः । तत् कथं भवद्वचने विस्रम्भामहे’ इति । आचार्यः स्मयमान इवाऽह–‘कस्तर्हि भवद्विस्रम्भविषयोऽर्थः?’

‘अपालेति श्वित्रिणी कथ्यते’ इति त ऊचुः ।

आचार्यः सपदि प्रतिजगाद–‘किम्प्रमाणोऽयं विस्रम्भः?’

तदा ते जिगीषया जगदुः–‘अनूचानः सम्प्रदायः’ इति ।

अथ पुनराचार्यः प्रतिजगाद–‘यदा यास्कादयोऽपि शौनकादयोऽपि सम्प्रदायविच्छेदेन व्यभ्रमिषुः कथमहो यूयमर्वाचीनं सम्प्रदायमविच्छिन्नं मन्यध्वे? सम्प्रदायोऽप्यज्ञानमूलो मूढो भवति । सत्यमश्रुतपूर्वमपि विजानताऽऽविष्करणीयं भवति । तेन भवत्विदमस्मदुपज्ञमाविष्करणम्’ इति ।

ते गलितगर्वा अपि व्यवदन्तैव–‘सम्प्रदायशरणा वयम् । मा नाम कश्चनापूर्वोऽर्थ आविष्कारि । पर्याप्तं नस्तद् यत् सम्प्रदायक्रमेणाऽगतम् । भवादृशा वृथा कलुषयन्ति परम्पराम्, भञ्जन्ति च सम्प्रदायम्’ इति ।

आचार्यः स्मयमान एवोवाच–‘ न वयं भञ्ज्मः सम्प्रदायम् । किन्तु विस्मृतं स्मारयामः । सम्प्रदायान्धानां चक्षुरुन्मीलनमेतत् । अद्यैव च परीक्षणमस्तु । सम्प्रति निर्गमिष्यामो वयमितः । सपद्येवान्यतः कश्चिद् विपश्चिदागमिष्यति । तं पृच्छत । स वक्ष्यति वः साम्प्रदायिकमर्थम्’ ।

एवमुक्त्वा मध्वोऽन्यमध्वानं पपात । अन्येन च पथा स विपश्चिदाजगाम यादृशो मध्वेनोक्तः । तं ददृशुरिमे विद्वांसः साकारमिव सम्प्रदायम् । तद्दर्शनेनैव तस्मिन् जातविस्रम्भास्तं पप्रच्छुः–‘अयि विद्वन्, अपालापदार्थे पण्डिता विवदन्ते । तद् भवान् ब्रवीतु, अपालेति कोऽर्थ इति?’

सप्रत्ययं स आह–'काऽत्र संशीतिः? अतितरुणी किलापालोच्यते' इति। ततस्ते पण्डिताः श्रद्धावन्तो बभूवुः, तस्मिन्नर्थे आचार्यमध्वस्य सर्वज्ञत्वे च। अतो वयमपि सदा वेदार्थचिन्तने मध्वस्यामः। तत्र विद्वत्सभायां मध्वो यमर्थमाविश्चकार तदनुसन्धानमग्ना वयम्।

अस्य विनियोगमाह ऋग्विधाने–

'कन्या वारिति सूक्तं तु सततं नियतो जपेत्।
'त्वग्दोषिणीं तथाऽलोम्नीं क्षिप्रं तस्मात् प्रमोचयेत्' इति। (२.१८१)

**हरिः ओ३म्॥**

**क॒न्या॒३॒॑वार॑वाय॒तीसोम॒मपि॑स्रु॒ताविद॑त्।**
**अस्त॒म्भर॑न्त्यब्रवी॒दिन्द्रा॑यसुनवैत्वाश॒क्राय॑सुनवैत्वा ॥ १ ॥**

**क॒न्या॑। वाः। अ॒व॒+य॒ती। सोम॑म्। अपि॑। स्रु॒ता। अ॒वि॒द॒त्॥ अस्त॑म्। भर॑न्ती। अ॒ब्र॒वी॒त्। इन्द्रा॑य। सु॒न॒वै॒। त्वा॒। श॒क्राय॑। सु॒न॒वै॒। त्वा॒॥ १ ॥**

आत्रेयी नाम काचित् कन्या। तामेतामत्रिपुत्रिकामाहुः। अत्रिगोत्रजा इति तु युक्तं वचः। अत एव तामात्रेयीत्येवाऽजुहुवुः। 'अपाला नाम' इति भ्रान्तं वचः। अत्र कन्येत्युक्त्यैवोत्तरत्रापालेति परामृश्यते। 'कुमारी कन्यका कन्या किञ्चित्प्रौढा' इति यादवप्रकाशः। अयं मन्त्रार्थः– कन्या नवयौवना आत्रेयी वाः नदीजलम् अवयती अवगाहनार्थं गच्छन्ती, अथच इन्द्रयज्ञार्थं सोममवयती, अवैतिरत्र जननार्थः, सोमरसं जनयन्ती, संहितायाम् 'अवायती' इति दीर्घः इन्द्रयज्ञे तात्पर्यातिशयार्थः। स्रुता नदीतीरं प्रति गता। स्रुता स्रुतौ मार्गे इति केचित्। सोममप्यविदत् अलब्ध। विदॢ लाभे लुङ्। अपिना नद्यामवजगाहे च। तां च लब्ध्वां सोमलतां अस्तं गृहं प्रति भरन्ती। हस्य भश्छन्दसि। आहरन्ती लताव्याजेन तन्मानिनं सोममब्रवीत्। किमिति? हे सोम, इन्द्राय तत्प्रतीके परमेश्वराय नारायणाय प्राणाय च त्वामभिषुणवै, ममाभीष्टदाने शक्ताय देवाय त्वां सुनवा इति। षुञ् अभिषवे, लोट्। तथाहि भावप्रकाशिकायां पण्डिताचार्यः–'पुरातनी



कन्येति कम्पार्थः। सोममवायती जनयन्ती (वाः) स्रुताऽपि प्राप्ता चालभत। गृहं प्रत्यावहन्तीत्यब्रवीत्– इन्द्रायेत्यादि' इति। आमनन्ति चास्मिन्नर्थे शाट्यायनकं ब्राह्मणम्–'सा तीर्थमभ्यवयन्ती सोमांशुमविन्दत्। तं समवारयत् तस्यै ह ग्रावाण इव दन्ता ऊदुः। स इन्द्र आद्रवद् ग्रावाणो वै वदन्तीति। सा तमभिव्याजहार– कन्या वारवायती सोममपि स्रुताऽविददिति। अस्यै वा इदं ग्रावाण इव दन्ता वदन्तीति विदित्वेन्द्रः पराङावर्तत। तमब्रवीत्– असौ य एषि वीरक इत्यादिना' इति। सन्दिग्धपुरातनत्वमिदं ब्राह्मणं विम्रष्टव्यं भवति।

अस्यामृचि पङ्क्तिश्छन्दः। तथाहि स्मरन्ति–'पङ्क्तिः पञ्चपदा' इति। 'अष्टाक्षराः पञ्च पादा यस्याः सा पङ्क्तिरुच्यते' इति च। पूर्वार्द्धे द्वौ पादौ। उत्तरार्द्धे त्रयः। अत्र 'कनिया वारवायती' इति प्रथमपादेऽष्टाक्षरता। कम्प एव चाक्षरन्यूनतां पूरयति। 'अस्तं भरन्तियब्रवीत्' इति तृतीयोऽप्यष्टाक्षरः। 'इन्द्राय सुनवै तुवा' इति, 'शक्राय सुनवै तुवा' इति विश्लेषेण चतुर्थपञ्चमयोरप्यष्टाक्षरता। संहत्य चत्वारिंशदक्षराणीति पङ्क्तिश्छन्दः॥ १॥

**अ॒सौयएषि॑वी॒रकोगृ॒हङ्गृ॑हंवि॒चाक॑शत्।**
**इ॒मञ्जम्भ॑सुतम्पिबधा॒नाव॑न्तङ्क॒रम्भिण॑मपू॒पव॑न्तमु॒क्थिन॑म्॥**
**॥ २ ॥**

**अ॒सौ। यः। एषि॑। वी॒रकः। गृ॒हम्+गृ॑हम्। वि॒+चाक॑शत्॥ इ॒मम्। जम्भ॑+सुतम्। पि॒ब॒। धा॒ना+व॑न्तम्। क॒र॒म्भिण॑म्। अ॒पू॒प+व॑न्तम्। उ॒क्थिन॑म् ॥ २॥**

'इन्द्राय सुनवै त्वा' इत्युक्त्वा सा त्वरमाणा दन्तैरेव दष्ट्वा तां सोमलताम-सोष्ट। सोमसवनस्वनमाकर्ण्य तस्या भक्तिवशीकृत इन्द्र आजगाम। अपश्यन् सोमं परावर्तयतेव। तदा तं विशेषतः स्तुवन्त्यात्रेयी पुनरेवमाह– हे इन्द्र, योऽसौ वीरस्त्वं विचाकशत् भासमानः सोममिच्छन् गृहङ्गृहमेषि स त्वमिमं जम्भसुतं मम दन्तैरभिषुतं सोमं पिब। जभि ताडने। जम्भयति खाद्यमेभिरिति

जम्भा दन्ताः । पानेन साकं खाद्यमपि  दद्यामित्याह–धानावन्तम् । धाना भर्जिता यवाः । करम्भाः  दधिसक्तवः ।  अपूपवन्तम् ।  उक्थेन शस्त्रेण च युक्तम् । स्तुतिपूर्वं सखाद्यं पेयं ददानीति  । अत्र वीरक इति विशेषणेन कश्चनापूर्वमर्थमाविश्चकार कन्या । विं विष्णुं कन्यासमीपमीरयन् को वायुर्वीरक उच्यते । तेन इन्द्रान्तर्गतौ प्राणनारायणौ ॥ २ ॥

**आचनत्वांचिकित्सामोधिंचनत्वानेमंसि ।**
**शनैरिवशनकैरिवेन्द्रांयेन्दोपरिंस्रव ॥ ३ ॥**

**आ । चन । त्वा । चिकित्सामः । अधिं । चन । त्वा । न । इमसि ॥**
**शनैः+इव । शनकैः+इंव । इन्द्रांय । इन्दोइतिं । परिं । स्रव ॥ ३ ॥**

आ चन सम्यगेव त्वा चिकित्सामः ज्ञातुमिच्छामः । अथ च त्वामेव नाधीमसि नाधिगच्छामः । इन्दो सोम, शनैःशनैरिव सादरं त्वमिन्द्राय परिस्रव । अथ हे इन्दो पवमान, इन्द्राय नारायणाय परिस्रय । अत्र 'अधिचन त्वा' इति विश्लेषेण द्वितीयपादेऽष्टाक्षरता । तेन केवलाऽनुष्टुप् ॥ ३ ॥

**कुविच्छकंत्कुवित्करंत्कुविन्नोवस्यंसस्करंत् ।**
**कुवित्पंतिद्विषोंयतीरिन्द्रेंणसङ्गमांमहै ॥ ४ ॥**

**कुवित् । शकंत् । कुवित् । करंत् । कुवित् । नः । वस्यंसः । करंत् ॥**
**कुवित् । पति+द्विषंः । यतीः । इन्द्रेंण । सम्+गमांमहै ॥ ४ ॥**

पीत्वा च खादित्वा च स नः मां कुविद् क्रियासमभिहारेण बहुकृत्वः शकत् शक्तिमतीः करोतु । ध्यानयोग्यां मानसीं शक्तिं भक्तिं च ददात्विति च । बहु चास्मभ्यमन्नपानादिकं करोतु यदिदमस्मास्वस्ति ज्ञानभक्त्यादिकं तत् कुवित् पुनरपि बहुलं करोत्विति च । बहु च वस्यसः वसुमतीः भगवत्प्रज्ञाख्यवसुमतीः करोतु । बहुलं पतन्त्यनेनेति पतिं पातकं द्विषन्त्यः, तत एव पतनहेतुं संसृतिं



विहाय यतीः यान्त्यो वयं सम्प्रतीन्द्रेण सङ्गच्छामहै ध्यानयोगे नारायणेन सङ्गता भवेमेति । स्फुटमनुष्टुप् छन्दः ॥ ४ ॥

**इमानित्रीणिंविष्टपातानीन्द्रविरोंहय ।**
**शिरंस्ततस्योर्वरामादिदम्मऽउपोदरें ॥ ५ ॥**

**इमानिं । त्रीणिं । विष्टपां । तानिं । इन्द्र । वि । रोहय ॥ शिरंः । ततस्यं ।**
**उर्वरांम् । आत् । इदम् । मे । उपं । उदरें ॥ ५ ॥**

याज्ञिका एवं व्याचक्षते–'इमानि त्रीणि स्थानानि तानि त्वमिन्द्र विरोहय । शिरः ततस्य मम पितुः । तथा उर्वरां पितुः क्षेत्रम् । ततः यदिदं मे उप उदरे इति गुह्यं निर्दिशति । तद्धि त्वग्दोषे सत्यसञ्जातरोमकं भवतीति शाट्यायनकम्–'तामब्रवीत्, अपाले किङ्कामाऽसीति । साऽब्रवीत्–'इमानि त्रीणि विष्टपा इति । खलतिर्हास्यै पिताऽस । तं हाखलतिं चकार । उर्वरा हास्य न जज्ञे । सा जज्ञे । उपस्थे हास्यै रोमाणि नाऽसुः । तान्युह जज्ञिरे' इति । 'रोहन्तु नामोपस्थे रोमाणि । रोहतां वा वक्षसि वक्षोजौ । नास्माकं तत्र कश्चन भरः । वयं तु 'त्रयोऽर्थाः सर्ववेदेषु' इत्याध्यात्मिकार्थचिन्तनपराः । तथाचायमन्योऽप्यर्थः स्फुरति–'यानीमानि शास्त्रप्रथितानि वि विष्णोः त्रीणि विष्टपानि श्वेतद्वीपानन्तासन-वैकुण्ठाख्यानि तानि मामप्यारोहय । अपि च यानीमानि देहगतानि त्रीणि विष्टपानि दक्षिणाक्षि, कण्ठः, हृदयमिति जाग्रत्स्वप्नसुषुप्तिस्थानानि विश्वतैजसप्राज्ञरूपस्य भगवतो धामानि । तत्र च ममाऽरोहय प्रादुर्भावय भगवद्रूपाणि । यथा ध्याने त्रिरूपं भगवन्तं साक्षात्करवाणि । तदेव विविच्याऽह– शिरस्ततस्य । ततस्य विततस्य विष्णोः एकं रूपं शिरः शिरसि गतं विश्वाख्यं जागरितस्थानम् । दक्षिणाक्षिगतमित्येतत् । उरुरवां कन्धरामुर्वरामाचक्षते परोक्षेण । कण्ठगतं स्वप्नस्थानं तैजसाख्यम् । आदिति आनन्तर्यवचनमाचक्षते । अथच मे उपोदरे उदरस्योपरि हृदयगतं रूपम् । सुषुप्तिस्थानं प्राज्ञाख्यम् ।

अत्र द्वितीयपादे– 'तानि+इन्द्र विरोहय' इति, तृतीये–'ततस्य+उर्वराम्' इति च विश्लेषेणाष्टाक्षरता ॥ ५ ॥

**अ॒सौच॒यान॑उ॒र्वरा॒दि॒मान्त॒न्वं॑३॒मम॑ ।**
**अथो॑त॒तस्य॒यच्छिर॒स्सर्वा॒तारो॑म॒शाकृ॑धि ॥ ६ ॥**

**अ॒सौ । च॒ । या । न॒ः । उ॒र्वरा॑ । आत् । इ॒माम् । त॒न्व॑म् । मम॑ ॥ अथो॒इति॑ ।**
**त॒तस्य॑ । यत् । शिर॑ः । सर्वा॑ । ता । रो॒म॒शा । कृ॒धि॒ ॥ ६ ॥**

अब्रह्मवादा याज्ञिका व्याचक्षते–'नः अस्माकं पितुर्याऽसौ उर्वरा यदिदमूषरं क्षेत्रमस्ति, आत् अनन्तरम्, ममेमां तन्वम्, इदं त्वग्दोषदुष्टं गुह्यस्थानम्, अथो अथापि च ततस्य तातस्य यच्छिरः रोमवर्जितमस्ति, सर्वाणि तानीमानि त्रीणि स्थानानि, रोमशा रोमशानि कृधि कुरु' इति। शौनकादीनां पक्षे उर्वरेति उर्वीमात्रवचनम्। अथाप्यूषरं क्षेत्रमित्याचक्षते। 'उर्वरा सर्वसस्यभूः' इति तु शाब्दिकाः । आस्तां तावदेतत् । आश्लिष्टतत्ववादानां नः पूर्वश्लोकान्विततया कश्चिदन्य एवार्थः स्फुरति। तथाहि–'या चासौ न उर्वरा तैजसस्थानं कन्धरा ताम्। आत् आरात् तत्समीपगताम्, इमामिति हस्तेन हृदयं परामृशन्ती आह मम तन्वं हृदयभागम्, प्राज्ञस्थानम्। अथो ततस्य जगति विततस्य वैश्वानरस्य यच्छिरसि गतं स्थानं दक्षिणाक्षि । तैजसप्राज्ञौ देहान्तरेवानुभवं जनयतः । वैश्वानरस्तु बाह्यं जगदनुभावयतीति जगति तत इत्युच्यते। तानि सर्वाण्यपि स्थानानि रोमशानि कृधि कुरु। कथं रोमशानि? दुःखाज्ञानयो रोधनेन केवलज्ञानानन्दमयानि । जाग्रत्स्वप्नयोः दुःखाज्ञाने । सुषुप्तौ गाढमज्ञानम् । आभ्योऽवस्थाभ्यो मामुपरि आरोपय । मुक्तिं प्रापयेत्यर्थः । 'आदिमां तनुवं मम' इति विश्लेषेणाष्टाक्षरता । कम्प एवं विश्लेषकार्यं सम्पादयति ॥ ६ ॥

**खेरथ॑स्य॒खेन॑स॒ऽखेयु॒गस्य॑शतक्रतो ।**
**अ॒पा॒लामि॑न्द्र॒त्रिष्पू॒त्व्यकृ॑णो॒स्सूर्य॑त्वचम् ॥ ७ ॥**



**खे । रथ॑स्य । खे । अन॑सः । खे । यु॒गस्य॑ । श॒त॒क्र॒तो॒इति॑शत+क्रतो ॥**
**अ॒पा॒लाम् । इ॒न्द्र॒ । त्रिः । पू॒त्वी । अकृ॑णोः । सूर्य॑+त्वचम् ॥ ७ ॥**

**॥ इत्यपालासूक्तं सम्पूर्णम् ॥**

याज्ञिका एवं व्याचक्षते–'रथशकटयुगानां छिद्रेषु त्वग्दोषपरिहाराय त्रिः त्रिवारं निष्कर्षणेन पूत्वी शोधयित्वा ततः अपालामेतन्नामिकामत्रिसुतां ब्रह्मवादिनीं सूर्यत्वचं सूर्यसमानत्वचं अकृणोः अकरोः । कल्याणतमरूपभाजनमकरोरित्यर्थः शाट्यायनकब्राह्मणे स्पष्टमभिहितः–'तां खे रथस्यात्यबृहत्। सा गोधाऽभवत् । सा खेऽनसोऽत्यबृहत् । सा कृकलास्यभवत् । तां खे युगस्यात्यबृहत्। सा संश्लिष्टिकाऽभवत्। तदेषाऽभ्यनूच्यते–खे रथस्य खेऽनस इति । तस्यै ह कल्याणतमं रूपाणां तद्रूपमास' इति । त्वग्दोषापनयनाय अक्षादिद्वारेष्वतिकर्षणमिति' इति। अस्माकं त्वन्य एव पन्थाः पुरः परिस्फुरति। तथाहि– खमिति ज्ञानकेन्द्रं सुषिरमुच्यते। 'खमिन्द्रिये दिवि व्योम्नि रन्ध्रनक्षत्रयोरपि' इति यादवप्रकाशः। 'खमिन्द्रिये सुखे स्वर्गे शून्ये बिन्दौ विहायसि। पुरे संवेदने क्षेत्रे' इति विश्वप्रकाशः। रथस्य शरीराख्यस्य खे द्युस्थाने चक्षुःकुहरे। येनानिति सोऽनाः कण्ठः। तस्यानसः खे कण्ठकुहरे विशुद्धिचक्रे। तथा स्तनयुगस्य मध्यगते खे हृदयाकाशे अनाहतचक्रे एवं त्रिषु स्थानेषु त्रिवारं पूत्वी 'स्वपाणिभ्यां त्रिरभिमृज्य संशोध्य' इति भावप्रकाशिकायाम्। पूत्वेत्यस्यार्थे पूत्वीति छन्दसि निपात्यते। 'स्नात्व्यादयश्च' (अ.सू.७.१.४९). इति हि पाणिनिः । तद् यथा– स्नात्वी, पीत्वी, पूत्वी । अतिशयार्थ ईकारः । 'तृतीयोऽतिशये' । हे शतक्रतो पूर्णज्ञान, इन्द्रगत प्राण, नारायण, अपालां नवयौवनां मामिदानीं सूर्यसमानवर्चसमन्तप्रज्ञाप्रभाप्रसरेणाकरोः। 'खे+अनसः' इति, 'पूत्वी+अकृणोः सूरियत्वचम्' इति च छन्दःपूर्तिः ॥ ७ ॥

**वैदिकवाङ्मयविपिने कण्टकखचिते सुदुर्गमे मार्गे ।**
**दीपाटिकां गृहीत्वा यो मां च सुखेन चारयामास ॥**

योऽपालाशब्दार्थं भुवीदमुपक्रमं प्रकट्यकार्षीत् ।
वेदप्रवचनचतुरं तं मध्वं मेऽध्वदं वन्दे ॥

इमामाचार्यगोविन्दो मध्वचोदितवर्त्मना ।
विववार निगूढार्थमपालासूक्तमद्भुतम् ॥

**इत्याचार्यगोविन्दस्य कृतिष्वपालासूक्तभाष्यं सम्पूर्णम् ॥**

—०—

# ६. उपान्त्यपवमानसूक्तम्



ॐ ॥ **सोमं पवमानं तं रतीशजनकं सदा वन्दे ।**
**सोमं पवमानं भारतीशमपि मुक्तिदौ पितापुत्रौ ॥**

शर्यणावतीति एकादशर्चं पवमानसोमदेवत्यम्, मारीचस्य कश्यपस्यार्षम्, पङ्क्तिश्छन्दः । तदिदं नवममण्डलस्योपान्त्यं शतोत्तरं त्रयोदशं सूक्तम् । यद्यपि बह्वर्थोऽयं मन्त्रग्रामः । तत्र भगवत्पादोक्तमर्थविशेषं केवलं प्रकटयितुमिदं प्रयतनम् । तथाहि सोमः पवमान इति प्राणनारायणावुच्येते । मुमुक्षुणा मोक्षप्राप्त्यर्थं प्रार्थ्येते । क्वचिदसमर्थस्य मुमूर्षोः कर्णयोरिमं मन्त्रं पुत्रादयः पठन्ति । तेनास्य 'कर्णसूक्तम्' इति प्रथा समजनि । अष्टाक्षराः पञ्च पादा इति पङ्क्तिश्छन्दः । तत्र आद्याः पञ्चमन्त्राः प्रथमो वर्गः । षड् द्वितीयः ।

## हरिः ओ३म् ॥

**शर्य्यणावतिसोममिन्द्रःपिबतुवृत्रहा ।**
**बलन्दधानआत्मनिकरिष्यन्वीर्य्यम्महदिन्द्रायेन्दोपरिस्रव ॥ १ ॥**

**शर्य्यणा+वति । सोमम् । इन्द्रः । पिबतु । वृत्र+हा ॥**
**बलम् । दधानः । आत्मनि । करिष्यन् । वीर्य्यम् । महत् । इन्द्राय । इन्दो-**
**इति । परि । स्रव ॥ १ ॥**

शर्य्यणावदिति कुरुक्षेत्रगतं किञ्चित् सर इति वदन्ति । यदा कुरुक्षेत्रमेव नाऽसीत् तदाऽप्ययं मन्त्र आसीत् । अतो मूलार्थान्वेषणपरा वयम् । तथाचायमर्थः । यणयोः ज्ञानानन्दयोः शरणं शरीरं शर्यणमुच्यते । शीर्यमाणत्वाच्च शर्यणम् । तदस्ति अधिष्ठानतयाऽस्येति शर्यणावत् मनः । द्वारावतीत्यादिवत् नामधेयत्वात् पूर्वपदवृद्धिः । मानसयज्ञे निहितं सोमं भक्तिरसं वृत्रहा इन्द्रः पिबतु । वृत्रमज्ञानं



हन्तीति वृत्रहा । इन्द्रः परमेश्वरो नारायणः । शं सुखं रं रतिः यं ज्ञानं णः मनोबलं चास्य नित्यं सन्तीति वा शर्यणावान् मानसयज्ञः । आत्मनि साधकजीवे बलं दधानः । आत्मबलं वर्धयन् । तथाऽऽत्मनि महत् वीर्यं ज्ञानसामर्थ्यं करिष्यन् हे इन्दो इष्टप्रद वायो । इं इष्टं मोक्षाख्यं दातुं शीलमस्येतीन्दुर्वायुः । मां इन्द्राय परि स्रव भगवल्लोकं गमय । 'इष्टप्रदानशीलत्वादिन्दुर्वायुः स एव च । सोमः सौम्यस्वरूपत्वात् पवमानश्च पावनात्' इत्यादि चर्ग्वेद-संहितायाम् । अत्र प्रथमचरणे 'शर्यणावति' इति विश्लेषेण, तुरीये च 'वीरियम्' इति विश्लेषेणाष्टाक्षरत्वम् । तेन चत्वारिंशदक्षरा पञ्चपदा पङ्क्तिः ॥ १ ॥

**आपवस्वदिशाम्पतऽआर्ज्जीकात्सोममीढ्वः ।**
**ऋतवाकेनसत्येनश्रद्धयातपसासुतऽइन्द्रायेन्दोपरिस्रव ॥ २ ॥**

**आ । पवस्व । दिशाम् । पते । आर्ज्जीकात् । सोम । मीढ्वः ॥ ऋत+**
**वाकेन । सत्येन । श्रद्धया । तपसा । सुतः । इन्द्राय । इन्दोइति । परि । स्रव ॥**

दिशां देशिकानां पते विश्वगुरो, मीढ्वः अभिलषितसेक्तः, हे सोम पवमान, आर्जीकात् ऋजूनां स्थानात् सत्यलोकात् इत आगत्य नः पवस्व पवित्रीकुरु । यथार्थवचनेन, सत्येन ज्ञानपूर्वकानुष्ठानेन, परतत्वश्रद्धया, निरन्तरतपसा च सुतः प्रसूतः अभिव्यक्तः सन् इन्द्रायेन्दो परिस्रव । 'मीढुवः' इति विश्लेषेण द्वितीयचरणेऽष्टाक्षरत्वम् ॥ २ ॥

**पर्ज्जन्यवृद्धम्महिषन्तँसूर्य्यस्यदुहिताभरत् ।**
**तङ्गन्धर्वाःप्रत्यगृभ्णन्तँसोमेरसमादधुरिन्द्रायेन्दोपरिस्रव ॥**
**॥ ३ ॥**

**पर्ज्जन्य+वृद्धम् । महिषम् । तम् । सूर्य्यस्य । दुहिता । आ । अभरत् ॥ तम् ।**
**गन्धर्वाः । प्रति । अगृभ्णन् । तम् । सोमे । रसम् । आ । अदधुः । इन्द्राय ।**
**इन्दोइति । परि । स्रव ॥ ३ ॥**

सूर्यनारायणस्य दुहिता श्रद्धामानिनी भारती। 'श्रद्धा वै सूर्यस्य दुहिता' इति शतपथब्राह्मणम्। तमेव नारायणं वेदार्थत्वेन हृदि आबभार। साधुलोकं प्रत्याजहर वा हस्य भः। कीदृशम्? परे ब्रह्मादयोऽनेन जायन्त इति पर्जन्यं ब्रह्मादिपितरम्, अत एव सर्वतः सदा वृद्धम्, कालतो गुणतश्च। परं जीव-जातं येन जायते स पर्जन्यः स्रष्टा विधिः। तेन वृद्धं देवेषूपदेशेन वर्धितम्। ज्ञापितमित्येतत्। महिषं महान्तं महितषड्गुणम्। तमेव ब्रह्मादिभिरुपदिष्टां गां वेदवाचं धारयन्तीति गन्धर्वाः वेदद्रष्टार ऋषयः प्रत्यगृह्णन् प्रतिगृहीतवन्तः। गृहीत्वा तं रसं सर्वसारं सोमे पवमाने मुख्यप्रतीके आदधुः दध्युः। 'वायौ मुख्यधिया' इति स्मरणात्। स त्वमिन्दो इन्द्राय परि स्रव। प्रथमपादे एकाक्षराधिकेयं पङ्क्तिः॥ ३॥

**ऋतँवदन्नृतद्युम्नसत्यँवदन्त्सत्यकर्म्मन्।**
**श्रद्धाँवदन्त्सोमराजन्धात्रासोमपरिष्कृतऽइन्द्रायेन्दोपरिस्रव॥**
**॥ ४॥**

**ऋतम्। वदन्। ऋत+द्युम्न। सत्यम्। वदन्। सत्य+कर्म्मन्॥ श्रद्धाम्। वदन्। सोम। राजन्। धात्रा। सोम। परि+कृतः। इन्द्राय। इन्दोइति। परि। स्रव॥ ४॥**

हे सोम पवमान, ऋतं निर्विकारं ज्ञानरूपं नारायणमेव सदा सर्ववेद-वचनैर्वन्नुपदिशन् जगति यथार्थज्ञानस्य प्रकाशक, तद्द्वारा भगवत्तत्वस्य प्रकाशक, सत्यं निर्दुष्टज्ञानानन्दरूपं सर्वजगत्सृष्ट्यादिकारणं च प्रतिपादयन् ज्ञान-कर्मणोरैक्यात् हे सत्यकर्मन्। 'ऋतं सत्यं परं ब्रह्म' इति नारायणश्रुतिः। 'ऋतं यथार्थविज्ञानं सत्यं तत्पूर्विका कृतिः' इति च स्मरन्ति। उत्कृष्टा मा विष्णुविषया मतिः। तया सहित हे सोम, त्वं श्रद्धामास्तिक्यबुद्धिं वदन् सतामुपदिशन् राजमान, हे सोम सत्सु सौम्य, त्वं धात्रा नारायणेन सर्वस्मादुपरि कृतः। अतस्त्वमेव प्रार्थ्यसे इन्द्रायेन्दो परिस्रवेति। धात्रा सह सत्यलोके परिष्कृत इति वा॥ ४॥



**सत्यमुग्रस्यबृहतस्संस्रवन्तिसंस्रवाः।**
**सँय्यन्तिरसिनोरसाःपुनानोब्रह्मणाहरऽइन्द्रायेन्दोपरिस्रव॥**
**॥ ५॥**

**सत्यम्+उग्रस्य। बृहतः। सम्। स्रवन्ति। सम्+स्रवाः॥ सम्। यन्ति। रसिनः। रसाः। पुनानः। ब्रह्मणा। हरे। इन्द्राय। इन्दोइति। परि। स्रव॥ ५॥ १॥**

**॥ इति प्रथमो वर्ग्गः॥**

सत्यं प्रति उग्रस्य, जगत् सत्यमिति विषये, ज्ञानानन्दरूपो भगवान् सर्वस्रष्टेति विषये चोग्रस्य। जगत्सत्यत्वं निराकुर्वतः भगवतो निर्गुणत्वं वदतश्च कदाऽपि न क्षमत इत्यर्थः। जीवेषु बृहतः ब्रह्मपदमारोक्ष्यतः तव संस्रवाः ज्ञानधारा वाग्धारा वा, सं स्रवन्ति निरन्तरम्। ज्ञानानन्दसारस्य भगवतो रसनीया गुणास्ततः संय्यन्ति निरन्तरमुद्गच्छन्ति। ब्रह्मणा परब्रह्मणा कार्येण वा जगत् पुनानः, हे हरे वायो इन्द्रायेन्दो परिस्रव। अत्र द्वितीयचरणे 'संसरवाः' इति छन्दःपूर्तिः॥ ५॥ १॥

—०—

**यत्रब्रह्मापवमानछन्दस्यां३वाचँवदन्।**
**ग्राब्णासोमेमहीयतेसोमेनानन्दञ्जनयन्निन्द्रायेन्दोपरिस्रव॥ ६॥**

**यत्र। ब्रह्मा। पवमान। छन्दस्याम्। वाचम्। वदन्॥ ग्राब्णा। सोमे। महीयते। सोमेन। आ+नन्दम्। जनयन्। इन्द्राय। इन्दोइति। परि। स्रव॥ ६॥**

महामन्त्रात्मकोऽयं वर्गः। अपमृत्यादिनिवारकोऽयं मन्त्रग्रामः। तदुक्तं महैतरेयोपनिषदि–'स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेत-दित्यवोचाम। तौ यत्र विहीयेते चन्द्रमा इवाऽदित्यो दृश्यते न रश्मयः प्रादुर्भवन्ति लोहिनी द्यौर्भवति यथा मञ्जिष्ठा व्यस्तः पायुः काककुलायगन्धिकमस्य

शिरो वायति सम्परेतोऽस्थाऽत्मा न चिरमिव जीविष्यतीति विद्यात् स यत् करणीयं मन्येत तत् कुर्वीत । यदन्ति यच्च दूरक इति सप्त जपेदादित् पत्नस्य रेतस इत्येका । यत्र ब्रह्मा पवमानेति षट् । उद्वयं तमसस्परीत्येका' इत्यादि । 'यत्र ब्रह्मेति षड्भिश्च प्रार्थनीयः स मारुतः । मोचयित्वैव संसाराद् विष्णुलोके कृधीति ह' इति चर्ग्वेदसंहितायाम् । 'यत्र ब्रह्मेति वैष्णवं लोकं व्रजेत्' इति च ।

अस्य मन्त्रस्यार्थ आचार्यैरेव भाषितः पुराणवचनेन-'यत्र ब्रह्मा वेदवाक्यैव्याचक्षाणो मखैर्यजन् । सोमेन च सुतेनेशमास्ते लोके हरिर्हि सः' इति । स्कान्दवचनमेतत् । स्ववचनेन च व्याचख्यौ–'ग्राब्णो सोमविषये सोमेनेष्ट्वा महीयते तेनैव विष्णुप्रीत्या स्वस्याऽनन्दं जनयन्' इति । अयमर्थः–यत्र मुक्तलोके मुक्तब्रह्मा छन्दस्यां वेदमयीं वाचं वदन् इतरमुक्तानां व्याचक्षाणः, सोमविषये सोमाभिषवार्थं ग्राब्णा युक्तः सोमयागादिभिर्मखैर्यजन्, तेन स्वस्यैवाऽनन्दं जनयन् मुक्तदेवैर्महीयते, तत्र माममृतं कुरु । इन्द्रायेन्दो परि स्रव । 'सर्वेष्टद जगत्प्राण मामादाय परिस्रव । यत्रासौ भगवान् विष्णुस्त्वं हि मोक्षप्रदः सदा' इति च स्कान्दे । 'इन्दुरिष्टप्रदत्वाद् यो वायुरादाय गच्छति । इन्द्रनाम्नः केशवस्य समीपं मुक्तमञ्जसा' इति च ॥ ६ ॥

**यत्रज्योतिरजस्रँय्यस्मिँल्लोकेस्वर्हितम् ।**
**तस्मिन्मान्धेहिपवमानामृतेलोकेऽअक्षितऽइन्द्रायेन्दोपरिस्रव ॥**
**॥ ७ ॥**

**यत्र । ज्योतिः । अजस्रम् । यस्मिन् । लोके । स्वः । हितम् ॥ तस्मिन् । माम् । धेहि । पवमान । अमृते । लोके । अक्षिते । इन्द्राय । इन्दो इति । परि । स्रव ॥ ७ ॥**

यत्र लोके अजस्रं ज्योतिर्ज्वलति । प्रकाशात्मकत्वात् । तमसः परत्वात् । यस्मिन् लोके स्वरानन्दमयं नारायणाख्यं ब्रह्म निहितम् । 'स्वरानन्दरूपो विष्णुः' इति



भगवत्पादवचनम् । तस्मिन् अमृते मरणरहिते अक्षिते अक्षीणे मुक्तानां लोके मां निधेहि पवमान । इन्द्रायेन्दो परिस्रव । द्वितीयचरणे 'सुवर्हितम्' इति विश्लेषेणाष्टाक्षरत्वम् ॥ ७ ॥

**यत्रराजावैवस्वतोयत्रावरोधनन्दिवः ।**
**यत्रामूर्य्यह्वतीरापस्तत्रमाममृतङ्कृधीन्द्रायेन्दोपरिस्रव ॥ ८ ॥**

**यत्र । राजा । वैवस्वतः । यत्र । अव+रोधनम् । दिवः ॥ यत्र । अमूः । यह्वतीः । आपः । तत्र । माम् । अमृतम् । कृधि । इन्द्राय । इन्दो इति । परि । स्रव ॥ ८ ॥**

यत्र वैवस्वतो यमोऽपि संहारकर्म विहाय मुक्तः सन् मुक्तान् रञ्जयन् विराजते । एकवचनमतन्त्रम् । अनन्ता वैवस्वताः । यत्र दिवो देव्याः सरस्वत्याः अवरोधनम् । परिवारभूताः सर्वदेवतास्त्रियः । 'दिवो देव्या अवरोधनं तस्याः परिवारभूताः सर्वदेव्यः । द्यौर्नाम वायुपत्नी' इति भगवत्पादवचनम् । यत्र अमूरिति दृश्यमानसादृश्यात् । 'यह्वतीः महत्यः' इति व्याचक्षते । न वक्तव्य-मेतत् । अमहत्योऽपि भवन्ति मुक्ताः । अतः 'यह्वतीः स्यन्दमानाः' इत्याह भगवत्पादः । तेन जलरूपेण स्यन्दमानाः गङ्गाद्या नदीदेवता इत्युक्तम् । ननु नदीनां स्यन्दमानत्वमपि न वक्तव्यम् । नहि नसन्यदमाना अपि नद्यो भवन्ति । अनधिगतमन्त्रभाव एवं भाषसे । न केवलं धृतस्त्रीरूपास्तत्र गङ्गाद्या वरुणादिभिर्विहरन्ति, नदीरूपेण स्यन्दन्ते चेति ज्ञापयितुमिदं विशेषणम् । यत्र जलादीन्यमपि चैतन्यरूपाणि । अप्राकृतत्वादित्येतत् । तत्र वैकुण्ठे माममृतं कुरु । अत इन्द्रायेन्दो सोम परिस्रव ॥ ८ ॥

**यत्रानुकामञ्चरणन्त्रिनाकेत्रिदिवेदिवः ।**
**लोकायत्रज्योतिष्मन्तस्तत्रमाममृतङ्कृधीन्द्रायेन्दोपरिस्रव ॥ ९ ॥**

**यत्र । अनु+कामम् । चरणम् । त्रि+नाके । त्रि+दिवे । दिवः ॥ लोकाः । यत्र । ज्योतिष्मन्तः । तत्र । माम् । अमृतम् । कृधि । इन्द्राय । इन्दोइति । परि । स्रव ॥ ९ ॥**

यत्र दिवो देव्याः सरस्वत्याः वाग्रूपाया अनुकामं यथेच्छं भगवत्येव चरणम् । अवान्तरार्थतयाऽपि नान्यपरता । कामं सर्वकमनीयं भगवन्तमन्वेवेति वा । यत्र लोका लोकिनश्च ज्योतिष्मन्तश्चिन्मयाः । तत्र त्रिनाके त्रिदिवे । स्वर्गलोकः प्रथमो नाकः । महरादिः सत्यान्तो द्वितीयः । अयं तृतीयो नाकस्त्रिनाकः । अत एव तृतीयं देवनमत्रेति त्रिदिवः । तत्र तृतीयस्यां दिवि मुक्तलोके तृतीयनाके माममृतं कुरु ॥ ९ ॥

**यत्रकामानिकामाश्चयत्रब्रध्नस्यविष्टपम् ।**
**स्वधाचयत्रतृप्तिश्चतत्रमाममृतङ्कृधीन्द्रायेन्दोपरिस्रव ॥ १० ॥**

**यत्र । कामाः । नि+कामाः । च । यत्र । ब्रध्नस्य । विष्टपम् ॥ स्वधा । च । यत्र । तृप्तिः । च । तत्र । माम् । अमृतम् । कृधि । इन्द्राय । इन्दोइति । परि । स्रव ॥ १० ॥**

यत्र कामा विषयभोगाः निकामाः स्त्रीभोगाश्च समग्राः । 'जक्षन् क्रीडन् रममाणः स्त्रभिर्वा यानैर्वा' इत्यादिश्रवणात् । यत्र ब्रध्नस्य विष्टपम् । मुक्तसूर्याणां लोकः । अथच मुक्तानपि बध्नाति स्वनियमेनेति ब्रध्नो नारायणः । तच्च बन्धनं रमणरूपम्, न दुःखावहमिति रेफेणाऽह । यच्च परं धनं मुक्तानां तस्य ब्रध्नस्य विष्टपं भुवनम् । यत्र क्रीडया जक्षतां स्वधा समृद्धमन्नं च । यत्र नित्यतृप्तिश्च सहजधर्मः । यत्र स्वधा स्वरूपेणैव धारणम् । न तु देहान्तरेणेति च । तत्र माममृतं कुरु ॥ १० ॥

**यत्रानन्दाश्चमोदाश्चमुदःप्रमुदआसते ।**
**कामस्ययत्राप्ताःकामास्तत्रमाममृतङ्कृधीन्द्रायेन्दोपरिस्रव ॥**
**॥ ११ ॥ २ ॥**



**यत्र । आ+नन्दाः । च । मोदाः । च । मुदः । प्र+मुदः । आसते ॥ कामस्य । यत्र । आप्ताः । कामाः । तत्र । माम् । अमृतम् । कृधि । इन्द्राय । इन्दोइति । परि । स्रव ॥ ११ ॥ २ ॥**

**॥ इति द्वितीयो वर्ग्गः ॥**

**इत्युपान्त्यं पवमानसूक्तं समाप्तम्**

—०—

अत्र 'आनन्दादीनां सूक्ष्मो भेदः' इत्याह वेङ्कटमाधवः । 'यत्र यस्मिन् लोके आनन्दादयः आसते । तेषामल्पो भेदो द्रष्टव्यः' इति सायणः । बालिशं व्याख्यानम् । एवमबोधकाद् वचनाद् वरमवचनम् । अहो अनेन मौनव्याख्यानेन तच्छिष्या भवेयुश्छिन्नसंशयाः । अत आनन्दादीनां को भेद इति वक्तव्यम् । आह च भगवत्पाद ऋग्वेदसंहितावचनेन–'अनन्यहेतुकं साक्षाद् भगवद्भक्ति-रूपकम् । सुखमानन्द इत्युक्तो मोदो भोगनिमित्तकः । प्रमोदस्तद्विशेषोत्थो मुन्नामात्यल्पभोगतः' इति । आनन्दः स्वरूपानन्दः । स च भक्तिरूपो मुक्तौ । बाह्या मुन्मोदप्रमोदाः । तद्यथा कुसुमदर्शनजं सुखं मुदित्युच्यते । तद्गन्धास्वादजं मोदः । प्रियाकेशपाशे कुसुमनिचयनिधानजं प्रमोद इत्युच्यत इति । तरुणस्य तरुणीदर्शनेन मुत् । आलिङ्गनेन मोदः । सुरतेन प्रमोदः । औत्कण्ठ्ये भेदः । सर्वेऽपि सुखानुभवप्रभेदाः । एते यत्र मुक्तौ आसते सामग्र्येण भवन्ति । कामस्य कामयमानस्य सर्वे कामाः यत्र कामनाक्षण एवाऽप्ताः । यद्यत्कामयते तत्तत् प्राप्नोति । सत्यकामत्वात् । तत्र माममृतं कृधि ॥ ११ ॥ २ ॥

**पवमानः पवमानः पवमानश्च पातु नः पवमानः ।**
**यो हरिमनसो जातो यश्च नियच्छति मनांसि लोकानाम् ॥**
**यो जीवजातनाथः प्रथयति महिमानं हरेस्त्रिभी रूपैः ।**
**सृजति च पाति च हरति त्रैलोक्यं यो हरिस्त्रिभी रूपैः ॥**

इदमाचार्यगोविन्दः सूक्तेऽस्मिन् पावमानके ।
वितेने विमलं भाष्यं विनेयजनवाञ्छया ॥

**इत्याचार्यगोविन्दस्य कृतिषु उपान्त्यपवमानसूक्तभाष्यं सम्पूर्णम्**

—०—

# ७. ओषधिसूक्तम्



ॐ ॥ **नमोऽस्तु धन्वन्तरये तरये भववारिधेः ।**
**दुर्वादिदन्तिहरये हरये दुरितारये ॥**

अथात ओषधिसूक्तं व्याख्यास्यामः ॥

तदिदं त्रयोविंशत्यृचमृग्वेदे दशममण्डले ९७तमं सूक्तमाथर्वणस्य भिषज आर्षम् । अनुष्टुप् छन्दः । ओषधिमानिन्योऽवान्तरदेवताः । ओषधीशश्चन्द्र-मण्डलगतो धन्वन्तरिर्देवता । तथाचानुक्रमणिका–'या ओषधीस्त्र्यधिका, आथर्वणो भिषक्, ओषधिस्तुतिः, आनुष्टभम्' इति । यद्यप्यस्य विनियोगो दीक्षितानामुपतापे सम्मार्जनायेत्याश्वलायनो मन्यते । 'प्रयोगे भिषजस्त्वेतद् यक्ष्मनाशाय कल्पते' इति च बृहद्देवतायां शौनकः । अत्र त्वपूर्वं प्रमेयान्त-रमाविष्कृतम्– सूक्तेनानेनाभिमन्त्रितस्य बीजस्याङ्कुरदलपुष्पबीजसृष्टिरिति । तथाहि श्रीमध्वविजये (१६.२-५) श्रूयतेऽयमितिहिासः–गोमतीतीरे, अयोध्यापरिसरे कश्चन शूद्रवर्णो राजा बभूव नास्तिक्यवादी । यात्रावशात् तत्रगतं मध्वं स आह–'या ओषधीरित्यादिमन्त्रैः सद्यः पुष्पफलनिष्पत्तिरुच्यते वैदिकैः । नचोपलभ्यते । ततस्तेषामप्रामाण्यम् । तत्सामान्यात् समस्तवेदस्याप्यप्रामाण्म्, उन्मत्तवचनवत्' इति । तदा मध्व ऊचे– 'वेदपठनेऽधिकारसम्पत्तिरपेक्षिता । अधिकारिभिः पठने स्यादेव पुष्पफलनिष्पत्तिः' इति । स राजा पुनराह–'नास्ति तादृशः कोऽप्यधिकारी, योग्यत्वे सत्यनुपलम्यमानत्वात्, खरविषाणवत्' इति । तमाक्षेपमसहमान आचार्यः स्वकरपल्लवाभ्यां मुद्गबीजान्यादायेदमोषधिसूक्तं जजाप । जप्त्वा सद्य एवाङ्कुरदलपुष्पबीजसृष्टिं विधाय नास्तिकाय राज्ञे दर्शयामास । अहो मध्वस्य करे निहितानि मुद्गबीजानि, मन्त्रपठनसमकालमङ्कुरितनि, पश्यत एव राज्ञः पल्लवितानि पुष्पितानि च फलितानि च । मूढो राजा लज्जितः स्वयं मूको



बभूवेति । सूक्तमिदं तैत्तिरीयसंहितायामपि पठ्यते [४.२.६]। तत्र तु विंशतिरेव मन्त्राः पठिताः । बहुधा विभिन्नः पाठः, विभिन्ना चाऽनुपूर्वी । अग्निश्च सूक्तर्षिः । ओषधिवापे विनियोग इति च श्रूयते । एत एव च मन्त्रा वाजसनेयकेऽपि पठ्यन्त ईषद्व्यत्यासेन । तत्पाठे सप्त-विंशतिर्मन्त्राः[१२.७५-१०१] । काण्वसंहितायामपि । परन्तु तत्र पञ्च-विंशतिर्मन्त्राः । [१३.७६-१००] स्फुटं च वाजसनेयकेऽस्य सूक्तस्याङ्कुरादि-प्ररोहहेतुत्वम्– 'अथो॒ त्वं दी॒र्घायु॑र्भू॒त्वा श॒तव॑ल्शा॒ विरो॑हतात्'[१२.१००] इति । ओषधिवापे विनियोग इति च स्फुटं याजुषैरभ्युपगम्यते । तदनुगुणतया चात्र सूक्तार्थो वर्ण्यते । तथाचायं मन्त्रार्थः–

**हरिः ओ३म् ॥**

**याऽओष॑धी॒ᳶपूर्वा॑जा॒ता दे॒वेभ्य॑स्त्रियु॒गम्पु॒रा ।**
**मनै॒नुब॒भ्रूणा॑म॒हंश॒तन्धामा॑निस॒प्तच॑ ॥ १ ॥**

**याः । ओष॑धीः । पूर्वाः॑ । जा॒ताः । दे॒वेभ्यः॑ । त्रि॒+यु॒गम् । पु॒रा ॥**
**मनै॑ । नु । ब॒भ्रूणा॑म् । अ॒हम् । श॒तम् । धामा॑नि । स॒प्त । च॒ ॥ १ ॥**

या ओषधयः पुरातन्यः सम्प्रति जाताः, अङ्कुरिता भवन्तु पल्लविताः । देवेभ्यः, अस्माभिः स्तुतेभ्यः ओषधिमानिभ्यः । अस्माकं वा स्तुतिभ्यः । दिवु स्तुतौ । देवेभ्य इति मुख्यत ओषधिमानिगतो बहुरूपो देवो धन्वन्तरिः । त्रिषु युगेषु पुरा जाताः । मयाऽऽहूता अस्मिन्नपि युगे भवन्तु जाताः । मन्ये नु बभ्रुवर्णानामोषधीनामहं शतं जन्मस्थानानि सामर्थ्यानि च, सप्तापि लोकान्, सप्तसु लोकेषु च । पुरुषमगदङ्कारेण बिभ्रतीति च बभ्रवः ॥ १ ॥

**श॒तंवो॑ऽअम्ब॒धामा॑निस॒हस्र॑मु॒तवो॒रुह॑ः ।**
**अधा॑शतक्रत्वोयू॒यमि॒मम्मे॑ऽअग॒दङ्कृ॑त ॥ २ ॥**

**श॒तम् । व॒ः । अ॒म्ब॒ । धामा॑नि । स॒ह॒स्र॑म् । उ॒त । व॒ः । रुह॑ः ॥**
**अध॑ । श॒त॒+क्र॒त्व॒ः । यू॒यम् । इ॒मम् । मे॒ । अ॒ग॒दम् । कृ॒त॒ ॥ २ ॥**

अम्ब मातर ओषधयः, भवदवानलदग्धानां निधानानि भगवद्रूपाणि च, वो धामानि स्थानानि सामर्थ्यानि च शतममितानि । उत वः प्ररोहः प्रादुर्भावश्च सहस्रममितः । अथ हे शतक्रत्वः, अमितज्ञाना अमितकर्माणः, इमं मे हस्तगतं धान्यविशेषं प्ररोहप्रतिबन्धकगदरहितं कुरुत, अगदाख्यं वेमं मुद्गं प्ररोहन्तं कुरुत ॥ २ ॥

**ओषधीःप्रतिमोदध्वम्पुष्पवतीःप्रसूवरीः ।**
**अश्वाऽइवसजित्वरीर्वीरुधःप्पारयिष्णवः ॥ ३ ॥**

**ओषधीः । प्रति । मोदध्वम् । पुष्प+वतीः । प्र+सूवरीः ॥**
**अश्वाः+इव । स+जित्वरीः । वीरुधः । पारयिष्णवः ॥ ३ ॥**

हे ओषधयः,मया स्तुतेन भगवता प्रत्येकं मुदिता भवत । मोदयत च पुष्पवत्यः फलवत्यो भूत्वा । अश्वाइव सह जयन्त्यः शत्रून् , ये वेदस्यामानतां मन्यन्ते । वीरुधो विरोहन्त्यः, पारयन्त्यश्च स्वीयं जनम् ॥ ३ ॥

**ओषधीरितिमातरस्तद्वोदेवीरुपब्रुवे ।**
**सनेयमश्वङ्गांवासऽआत्मानन्तवपूरुष ॥ ४ ॥**

**ओषधीः । इति । मातरः । तत् । वः । देवीः । उप । ब्रुवे ॥**
**सनेयम् । अश्वम् । गाम् । वासः । आत्मानम् । तव । पुरुष ॥ ४ ॥**

हे ओषधयः, देव्यो मातरः बीजेनाङ्कुरादेर्जनयित्र्यः, वः पुरुषं भगवन्तं प्रतीत्थं तद् वच उप ब्रुवे । कथम्? हे परमपुरुष धन्वन्तरे, तवाहमश्वं गां वासः आत्मानमपि सनेयं दद्यामिति । अश्व इत्यन्तःप्रज्ञा, इन्द्रियाणि च । गौरिति वाक् । वास इति शरीरम् । तदुक्तं भागवते– 'कायेन वाचा मनसेन्द्रियैर्वा–' इत्यादि ॥ ४ ॥

**अश्वत्थेवोनिषदनम्पर्णेवोवसतिष्कृता ।**
**गोभाजऽइत्किलासथयत्सनवथपूरुषम् ॥ ५ ॥**



**अश्वत्थे । वः । नि+सदनम् । पर्णे । वः । वसतिः । कृता ॥**
**गो+भाजः । इत् । किल । असथ । यत् । सनवथ । पुरुषम् ॥ ५ ॥**

वः अश्वत्थे निषदनम् । पर्णे पलाशवृक्षे च वो वसतिः कृता । विशिष्य यज्ञोपयोगितया तत्र हि विशेषतः सन्निहितो भगवान् । अथ च अश्वत्थमये पात्रे वो निषदनम् । पलाशमये च । अश्वत्थकाष्ठनिर्मिते पात्रे पालाशे वा यज्ञकर्मण्योषधयो निधीयन्त इत्यप्याहुः । यद् यदा यूयं परमपुरुषं सनवथ सम्भजध्वे तदा मुख्यतो भगवत्पराणां गवां वेदवाचां यूयमपि भाजनान्यसथ भवथ किल । अथ च यदा हविष्ट्वेन हुतास्तदा गोभाजो गामादित्यं भजमाना भवथ किल । यदुक्तम्–'अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते' इति । आदित्यद्वारा परमपुरुषं च सनवथ ॥ ५ ॥

**॥ इति प्रथमो वर्ग्गः ॥**

**यत्रौषधीस्समग्मतराजानस्समिताविव ।**
**विप्रस्सऽउच्यतेभिषग्रक्षोहामीवचातनः ॥ ६ ॥**

**यत्र । ओषधीः । सम्+अग्मत । राजानः । समितौ+इव ॥**
**विप्रः । सः । उच्यते । भिषक् । रक्षः+हा । अमीव+चातनः ॥ ६ ॥**

यत्रौषधयः समगच्छन्त यथा युद्धे राजानः । तत्र विप्रः सर्वज्ञः स भिषगुच्यते धन्वन्तरिर्भगवान् रक्षोहा व्याधीनां नाशयिता ॥ ६ ॥

**अश्वावतींसोमावतीमूर्ज्जयन्तीमुदोजसम् ।**
**आवित्सिसर्वाऽओषधीरस्माऽअरिष्टतातये ॥ ७ ॥**

**अश्व+वतीम् । सोम+वतीम् । ऊर्ज्जयन्तीम् । उत्+ओजसम् ॥**
**आ । अवित्सि । सर्वाः । ओषधीः । अस्मै । अरिष्ट+तातये ॥ ७ ॥**

अश्ववती सोमवती ऊर्जस्वती ओजस्वती इत्येताश्चतुर्विधा ओषधयः । अश्ववती या स्मृतिशक्तिं वर्धयति । सोमवती मनोबलम् । ऊर्जस्वतीन्द्रियपाटवम् ।

ओजस्वती देहबलमिति । ता एता ओषधीः सर्वा आ सम्यक् अवित्सि अवेदिषम् । जानन् स्तौमीत्येतत् । अस्मा अरिष्टतातये प्ररोहप्रतिबन्धकदोष-नाशाय ॥ ७ ॥

**उच्छुष्माऽओषधीनाङ्गावोगोष्ठादिवेरते ।**
**धनंसनिष्यन्तीनामात्मानन्तवपूरुष ॥ ८ ॥**

**उत् । शुष्माः । ओषधीनाम् । गावः । गोस्थात्+ईव । ईरते ॥**
**धनम् । सनिष्यन्तीनाम् । आत्मानम् । तव । पुरुष ॥ ८ ॥**

ओषधीनां शुष्माः सामर्थ्यानि उदीरते उद्गच्छन्ति । गोष्ठादिव गावः । हे परमपुरुष, सम्पद्रूपमात्मानं तव समर्पयितुकामानाम् । 'सनिषियन्तीम्' इति विश्लेषेण छन्दःपूर्तिः ॥ ८ ॥

**इष्कृतिर्नामवोमाताथोयूयंस्थनिष्कृतीः ।**
**सीराऽप्पतत्रिणीस्थनयदामयतिनिष्कृथ ॥ ९ ॥**

**इष्कृतिः । नाम । वः । माता । अथोइति । यूयम् । स्थ । निः+कृतीः ॥**
**सीराः । पतत्रिणीः । स्थन । यत् । आमयति । निः । कृथ ॥ ९ ॥**

हे ओषधयः, वो माता भगवन्मूर्तिः इष्कृतिर्नाम बलकर्त्रीति । अथो तस्माद् यूयमपि दोषनिराकृतयः स्थ । सीरा उत्सरणशीला उत्पतनशीलाश्च स्थन भवथ । यदा कश्चिदज्ञानादिभिरामयवान् भवति तदा तं निष्कृथ संस्कुरुथ । 'माता+अथो' इति पादयोर्विश्लेषेण छन्दः पूर्तिः ॥ ९ ॥

**अतिविश्वाऽप्परिष्ठास्तेनऽइवव्रजमक्रमुः ।**
**ओषधीऽप्प्राचुच्यवुर्यत्किञ्चतन्वो३ रपः ॥ १० ॥**

**अति । विश्वाः । परि+स्थाः । स्तेनः+ईव । व्रजम् । अक्रमुः ॥**
**ओषधीः । प्र । अचुच्यवुः । यत् । किम् । च । तन्वः । रपः ॥ १० ॥**



विश्वतो व्याप्ताः परितः स्थिताः ओषधयः स्तेनइव गोष्ठं दोषमतिक्रान्तवत्यः । यत् किञ्च तन्वो रपो दुरितमस्ति तच्च प्राच्यावयन्निति । निश्चितमतीतत्वेन भण्यते । प्रच्यावयन्त्विति वा । अत्र प्रथमपादे सप्ताक्षराणि द्वितीये नवेति संहत्य द्वयोरप्यष्टाक्षरता । प्र+अचुच्यवुरिति तृतीये । 'तनुवा' इति तुरीये । कम्प एव चाक्षरं पूरयति ॥ १० ॥ २ ॥

**॥ इति द्वितीयो वर्ग्गः ॥**

**यदिमावाजयन्नहमोषधीर्हस्तऽआदधे ।**
**आत्मायक्ष्मस्यनश्यतिपुराजीवगृभोयथा ॥ ११ ॥**

**यत् । इमाः । वाजयन् । अहम् । ओषधीः । हस्ते । आ+दधे ॥**
**आत्मा । यक्ष्मस्य । नश्यति । पुरा । जीव+गृभः । यथा ॥ ११ ॥**

यदिमा ओषधीः वाजयन् बलमादधदहं हस्त आदधे ततः पुरैव यक्ष्मस्य ओषधिप्ररोहप्रतिबन्धकस्याऽत्मा स्वरूपं नश्यति । यथा जीवग्रहान्मृत्योर्जीवात्मा नश्यति तथेति ॥ ११ ॥

**यस्यौषधीऽप्प्रसर्प्पथाङ्गमङ्गम्परुष्परुः ।**
**ततोयक्ष्मंविबाधध्वऽउग्रोमद्ध्यमशीरिव ॥ १२ ॥**

**यस्य । ओषधीः । प्र+सर्प्पथ । अङ्गम्+अङ्गम् । परुः+परुः ॥**
**ततः । यक्ष्मम् । वि । बाधध्वे । उग्रः । मद्ध्यमशीः+ईव ॥ १२ ॥**

हे ओषधयः, यस्य सस्यस्य अङ्गमङ्गं पर्वपर्व च प्रसर्पथ ततस्ततः रोहविरोधि यक्ष्मं विबाधध्वे । उग्रो मध्यमस्थानगो राजा दुर्बलान् शत्रूनिव । हृदय-मध्यमध्यासीन उग्रो रुद्रो हृद्रोगमिव च । 'प्रसर्प्पथ+अङ्गमङ्गम्' इति विश्लेषेण छन्दःपूर्तिः ॥ १२ ॥

**साकंयक्ष्मप्रपतचाषेणकिकिदीविना ।**
**साकंवातस्यध्राज्यासाकन्नश्यनिहाकया ॥ १३ ॥**

**साकम् । यक्ष्म । प्र । पत । चाषेण । किकिदीविना ॥**
**साकम् । वातस्य । ध्राज्या । साकम् । नश्य । नि+हाकया ॥ १३ ॥**

हे बीजक्षयहेतुभूत यक्ष्म, साकं चाषेण पक्षिणा किकीति शब्दापयता दूरं प्रपत । वातस्य ध्राज्या वेगेन सह । ध्रज गतौ । तदेव स्फुटमाह– निहाकया वात्यया साकं नाशं गच्छ । नितरां हन्तीति निहाका । गोधिकेत्येके । 'साकं यक्ष्म' इति 'वातस्य ध्राजिया' इति च विश्लेषेण छन्दःपूर्तिः । निचृदनुष्टुब् वा ॥ १३ ॥

**अन्यावोऽन्यामवत्वन्यान्यस्याऽउपावत ।**
**तास्सर्वास्संविदानाऽइदम्मेप्रावतावचः ॥ १४ ॥**

**अन्या । वः । अन्याम् । अवतु । अन्या । अन्यस्याः । उप । अवत ॥**
**ताः । सर्वाः । सम्+विदानाः । इदम् । मे । प्र । अवत । वचः ॥ १४ ॥**

हे ओषधयः, अन्या ओषधिस्ततोऽन्यां प्रविशतु । तथाऽन्या अन्यस्याः समीपम् । एवं परस्परं सङ्गता उपगच्छत । सर्वास्ता देवताः संविदानाः सङ्गताः सत्य इदं मे वचः प्रावत । अत्र 'अन्यामवतु+अस्या' इति पादयोर्विश्लेषेण, उत्तरार्धे च 'ताः सर्वाः' इति क्षैप्रविश्लेषेण छन्दःपूर्तिः ॥ १४ ॥

**याःफलिनीर्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः ।**
**बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वंहसः ॥ १५ ॥**

**याः । फलिनीः । याः । अफलाः । अपुष्पाः । याः । च । पुष्पिणीः ॥**
**बृहस्पति+प्रसूताः । ताः । नः । मुञ्चन्तु । अंहसः ॥ १५ ॥ ३ ॥**

याः फलवत्यः या अफला या अपुष्पा याश्च पुष्पवत्यः बृहस्पतिना मुख्यप्राणेन नारायणेन चानुज्ञातास्ता नोंऽहसो मोचयन्तु । अत्र 'मुञ्चन्तु+अंहसः' इति विश्लेषेऽपि तृतीयपादः सप्ताक्षर एव भवति । 'बृहस्पतिप्रसूतास्ताः' इत्यत्र



पादावसाने तुरीयः सप्ताक्षरो भवति । तेनेयं निचृदनुष्टुबिति वक्तुमुचितम् । अनुक्रमणिकायामनुष्टुबित्येवोक्तम् ॥ १५ ॥ ३ ॥

**॥ इति तृतीयो वर्गः ॥**

**मुञ्चन्तुमाशपथ्याऽदथोवरुण्यादुत ।**
**अथोयमस्यपड्वीशात्सर्वस्माद्देवकिल्बिषात् ॥ १६ ॥**

**मुञ्चन्तु । मा । शपथ्यात् । अथोऽइति । वरुण्यात् । उत ॥**
**अथोऽइति । यमस्य । पड्वीशात् । सर्वस्मात् । देव+किल्बिषात् ॥ १६ ॥**

शपथसञ्जातात् पापान्मां मोचयन्तु । अथो वरुणपाशसम्भवाज्जलविलयादि-रूपात् पापादपि । अथो यमस्य पड्वीशात् पादशृङ्खलाबन्धरूपात् पाशात् । 'पश्चाच्चरणशङ्कौ तु पड्वीशो घुटिकोऽपि च' इति यादवप्रकाशः । किमेतस्मा-देतस्मादिति विशिष्य कथनेन? सर्वस्मादपि देवविषयात् किल्बिषात् । 'शपथियात्' इति 'वरुणियात्' इति च विश्लेषेण छन्दःपूर्तिः ॥ १६ ॥

**अवपतन्तीरवदन्दिवऽओषधयस्परि ।**
**यञ्जीवमश्नवामहैनसरिष्यातिपूरुषः ॥ १७ ॥**

**अव+पतन्तीः । अवदन् । दिवः । ओषधयः । परि ॥**
**यम् । जीवम् । अश्नवामहै । न । सः । रिष्याति । पुरुषः ॥ १७ ॥**

दिवोऽधः पतन्त्य ओषधिमानिन्य इत्थं पर्यवदन् । कथम्? यं जीवं अश्नवामहै व्याप्नुमः शक्त्याधानेन न स नश्यति पूरुष इति पुरुषश्रेष्ठः ॥ १७ ॥

**याऽओषधीस्सोमराज्ञीर्बह्वीश्शतविचक्षणाः ।**
**तासान्त्वमस्युत्तमारङ्कामायशंहृदे ॥ १८ ॥**

**याः । ओषधीः । सोम+राज्ञीः । बह्वीः । शत+विचक्षणाः ॥**
**तासाम् । त्वम् । असि । उत्+तमा । अरम् । कामाय । शम् । हृदे ॥१८॥**

या ओषधयः सोमनियम्याः। सोमो ह्योषधीश उच्यते। बहुविधा बहु-जानन्त्यश्च। तासां त्वमस्युत्तमा। अलं कामाय कमनीयाय हृदयाय शं सुखकरी भव । त्वां प्ररोहन्तीं कामयमानाय अङ्कुरादिभावेन प्ररूढा सुखदा भव । 'त्वमसि उत्तमा+अरम्' इति विश्लेषेण छन्दःपूर्तिः । 'तासामसि त्वमुत्तमा' इति वाजसनेयके ॥ १८ ॥

**या ओषधीस्सोमराज्ञीर्विष्ठिताऽपृथिवीमनु ।**
**बृहस्पतिप्रसूताऽअस्यैसन्दत्तवीर्य्यम्** ॥ १९ ॥

**याः । ओषधीः । सोम+राज्ञीः । वि+स्थिताः । पृथिवीम् । अनु ॥**
**बृहस्पति+प्रसूताः । अस्यै । सम् । दत्त । वीर्यम् ॥ १९ ॥**

या ओषधयः सोमदेवत्याः पृथिवीमनुगत्य विविधं स्थिताः। बृहस्पतिनाऽनुज्ञाता यूयमस्या ओषध्यै वीर्यं सन्दत्त। 'वीरियम्' इति विश्लेषे सति एकत्रिंशदक्षरा निचृदनुष्टुबिति युक्तम् ॥ १९ ॥

**मावोरिषत्खनितायस्मैचाहङ्खनामिवः ।**
**द्विपच्चतुष्पदस्माकंसर्वमस्त्वनातुरम्** ॥ २० ॥

**मा । वः । रिषत् । खनिता । यस्मै । च । अहम् । खनामि । वः ॥**
**द्वि+पत् । चतुः+पत् । अस्माकम् । सर्वम् । अस्तु । अनातुरम् ॥ २० ॥**

हे ओषधयः, भूमेः खनिता कुद्दालादिर्मा वो हिंसीत्। यस्मै चाहं खनामि वः स च मा हिंसीत्। हिंसकोऽयमिति भावं मा कुरुत। द्विपत् पुत्रादिकं चतुष्पद् गवादिकं चेति सर्वमस्माकमनातुरमस्तु। 'अस्तु+अनातुरम्' इति विश्लेषेऽपि प्रथमपादः सप्ताक्षर इतीयमपि निचृदनुष्टुबिति युक्तम् ॥ २० ॥

**याश्चेदमुपशृण्वन्तियाश्चदूरम्परागताः।**
**सर्वास्सङ्गत्यवीरुधोस्यैसन्दत्तवीर्य्यम्** ॥ २१ ॥



**याः । च । इदम् । उप+शृण्वन्ति । याः । च । दूरम् । परा+गताः ॥**
**सर्वाः । सम्+गत्य । वीरुधः । अस्यै । सम् । दत्त । वीर्य्यम् ॥ २१ ॥**

याश्च ओषधय इदं स्तोत्रमुपशृण्वन्ति, याश्च दूरं परावृत्य गताः ताः सर्वा वीरुधो विरोपयन्त्योऽस्या ओषध्यै वीर्यं सन्दत्त । 'वीरुधो+अस्यै सन्दत्त वीरियम्' इति विश्लेषेण छन्दःपूर्तिः ॥ २१ ॥

**ओषधयस्संवदन्तेसोमेनसहराज्ञा ।**
**यस्मैकृणोतिब्राह्मणस्तंराजन्पारयामसि** ॥ २२ ॥

**ओषधयः । सम् । वदन्ते । सोमेन । सह । राज्ञा ॥**
**यस्मै । कृणोति । ब्राह्मणः । तम् । राजन् । पारयामसि ॥ २२ ॥**

ओषधयः अवान्तराभिमानिदेवताः सोमेन राज्ञा सह संवदन्ते । किमिति? यस्मै पुरुषार्थाय ब्राह्मणो ज्ञानी प्रार्थनां करोति तं हे राजन्, पुरुषार्थं प्रापयाम इति। 'सह राजना' इति विश्लेषेण छन्दःपूर्तिः। निचृदनुष्टुबिति युक्तम् ॥२२॥

**त्वमुत्तमास्योषधेतववृक्षाऽउपस्तयः ।**
**उपस्तिरस्तुसो३स्माकंयोऽअस्माँअभिदासति** ॥ २३ ॥

**त्वम् । उत्+तमा । असि । ओषधे । तव । वृक्षाः । उपस्तयः ॥ उपस्तिः ।**
**अस्तु । सः । अस्माकम् । यः । अस्मान् । अभि+दासति ॥ २३ ॥ ४ ॥**

**॥ इति चतुर्थो वर्ग्गः ॥**

**॥ इत्योषधिसूक्तं सम्पूर्णम् ॥**

हे ओषधे, त्वमुत्तमाऽसि मन्त्रसंस्कृता हस्ते प्ररोहन्ती। तव पुरस्तादन्ये वृक्षा उपस्तयोऽधःकृता योग्यतया । योऽस्मानभिहिनस्ति वेदा उन्मत्तभाषितमिति वदन्, सोऽप्यस्माकमुपस्तिरधःस्थितोऽस्तु पराजित इति । अत्र प्रथमचरणे 'उत्तमासि+ओषधे' इति विश्लेषेण छन्दः पूर्तिः ॥ २३ ॥

इमामाचार्यगोविन्दः प्रमृष्टां शब्दतोऽर्थतः ।
व्याख्यामोषधिसूक्तस्य वितेने गुरुतुष्टये ॥

**इत्याचार्यगोविन्दस्य कृतिषु ओषधिसूक्तभाष्यं समाप्तम् ॥**

—०—

# तैत्तिरीयाणामोषधिसूक्तम्

**हरिः ओ४म् ॥**

**या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा ।**
**मन्दामि बभ्रूणामह९ शतं धामानि सप्त च ॥ १ ॥**

**याः । जाताः । ओषधयः । देवेभ्यः । त्रियुगमितित्रि+युगम् । पुरा ॥**
**मन्दामि । बभ्रूणाम् । अहम् । शतम् । धामानि । सप्त । च ॥ १ ॥**

**ॐ ॥ अथ तित्तिरिपरिभुक्तं व्याख्यास्यामीषदोषधिस्तवनम् ।**
**ओषधिदेवान् नत्वा धन्वन्तरिमपि भवाम्बुधेश्च तरिम् ॥**

अथातस्तैत्तिरीयाणामोषधिस्तुतिं विशिष्य व्याख्यास्यामः । यतस्तैत्तिरीया वयम् ।

तैत्तिरीयसंहितायाश्चतुर्थकाण्डे द्वितीयप्रपाठके प्रश्ने वा षष्ठोऽयमोषधीनां विंशत्यृचोऽनुवाकः । अग्निरनुवाकर्षिः । ओषधिमानिनो देवताः । ओषधीशः सोमो देवता । सोमनाथो धन्वन्तरिर्देवता ।

ओषधिमानिभ्यो देवेभ्यो या ओषधयः पुरा त्रियुगं नारायणं प्रति तत्सेवार्थं जाताः बिभ्रतीति बभ्रूणां जीवजातपोषकाणां तासां शतं अमितानि धामानि रोहस्थानानि, सप्तधातुपोषकतया सप्तविधानि च धामानि सामर्थ्यानि अहं मन्दामि जानामि, ज्ञात्वा स्तौमि । मदि स्तुतौ । मदि गतौ ॥ १ ॥

**शतं वो अम्ब धामानि सहस्रमुत वो रुहः ।**
**अधा शतक्रत्वो यूयमिमं मे अगदं कृत ॥ २ ॥**

**श॒तम्। व॒ः। अ॒म्ब॒। धामा॑नि। स॒हस्र॑म्। उ॒त। व॒ः। रुह॑ः॥ अथ॑।**
**श॒त॒क्र॒त्व॒इति॑ श॒त+क्र॒त्व॒ः। यू॒यम्। इ॒मम्। मे॒। अ॒ग॒दम्। कृ॒त॒॥ २॥**

अम्बेति प्रत्येकं प्रीत्या सम्बोधनम्। हे मातरः। अं भगवन्तं बान्ति कामयन्तीति वा 'ब कामने'। रुहः रोहस्थानानि। इममपि बीजगतं जीवमगदं कृत, अरोगः सन् यथा वर्धेत तथा कुरुत॥ २॥

**पुष्पा॑वतीः प्र॒सूव॑तीः फ॒लिनी॑रफ॒ला उ॒त।**
**अश्वा॑ इव स॒जित्व॑रीर्वी॒रुध॑ः पारयि॒ष्णव॑ः ॥ ३ ॥**

**पुष्पा॑वती॒रिति॒पुष्प॑+व॒ती॒ः। प्र॒सूव॑ती॒रिति॑प्र+सूव॑तीः। फ॒लिनी॑ः। अ॒फ॒लाः। उ॒त॥ अश्वा॑ः। इ॒व॒। स॒जित्व॑री॒रिति॑स+जित्व॑रीः। वी॒रुध॑ः। पा॒र॒यि॒-ष्णव॑ः॥ ३॥**

काश्चनौषधयः पुष्पवत्यः। काश्चन पुष्पं विना बहूनि बीजान्येव प्रसुवते। अश्वाः शत्रूणामिव सहैव रुजां जिष्णवः। वीरुधः प्रतानवत्यो भूत्वा रोगं विरुन्धाना रोगिणां पारयिष्णवः॥ ३॥

**ओष॑धी॒रिति॑ मात॒रस्तद्वो॑ देवी॒रुप॑ ब्रुवे।**
**रपा॑ꣳसि वि॒घ्नतीरि॑त रप॑(१)श्चा॒तय॑मानाः ॥ ४ ॥**

**ओष॑धीः। इति॑। मा॒त॒रः। तत्। व॒ः। दे॒वी॒ः। उपेति॑। ब्रु॒वे॒॥ रपा॑ꣳसि। वि॒घ्न॒तीरिति॑वि+घ्न॒तीः। इ॒त॒। रप॑ः(१)। चा॒तय॑मानाः॥ ४॥**

अयि मातर ओषधयः, रपांसि दुरितानि विशेषेण घ्नन्त्य इत आगच्छत। रपांसि कायिकान् रोगान् वा। रपः मानसमाधिं च चातयमाना नाशयन्त्य आगच्छत इति अहं हे देवीः द्योतमाना वः उप ब्रुवे प्रार्थये॥ ४॥

**अ॒श्व॒त्थे वो॑ नि॒षद॑नं प॒र्णे वो॑ वस॒तिः कृ॒ता।**
**गो॒भाज॒ इत् किला॑सथ॒ यत् स॒नव॑थ॒ पूरु॑षम् ॥ ५ ॥**



**अ॒श्व॒त्थे। व॒ः। नि॒षद॑न॒मिति॑नि+सद॑नम्। प॒र्णे। ष॒ः। व॒स॒तिः। कृ॒ता॥ गो॒भाज॒इति॑गो+भाज॑ः। इत्। किल॑। अ॒स॒थ॒। यत्। स॒नव॑थ। पूरु॑षम्॥ ५॥**

अश्वत्थे वो नितरां सदनम्। विशेषतः भगवत्सन्निधानपात्रत्वात्। 'वृक्षाणामहमश्वत्थः' इति हि गीतासु। अश्वत्थे ओषधीनां नितरां सदनादेव हि स जीवातुर्बभूव श्वासवायौ प्राणशक्त्याधानेन। स्त्रीणां च गर्भे शक्त्याधानेन। पर्णे पलाशद्रुमे च वो वसतिः कृता विहिता भगवता। अतः अश्वत्थपलाशमयी समिद् यज्ञार्थमुपयुज्यते। गाः भजन्तीति गोभाजः किल भवथ। गवां मूत्रपुरीषयोः सन्निधाय रुजां द्रावणात्। यत् या यूयं पूरुषं देहिनं सनवथ तद्देहरसेन सम्भक्ताः सत्यस्तं रक्षत। अथच यत् यदा गोभाजः मन्त्रपूताः हुता भवथ तदा तं होतारं पुरुषं प्रति सनवथ अभीष्टप्रदा भवथ। अथच बीजरूपेण उप्ताः गोभाजः भूमौ लीना भवथ। अथ तं वप्तारं पुरुषं सनवथ अभीष्टदानेन सम्भजथ। सम्भजतेति वा। वस्तुतस्तु यूयं देवतारूपेण गोभाजः स्वर्गभाजः किलासथ भवथ। तत्र च परमपुरुषं सनवथ परमपुरुषेण सदा सङ्गता इत्यर्थः। षण सम्भक्तौ। षणु दाने॥ ५॥

**य॒द॒हं वा॒जय॑न्नि॒मा ओष॑धी॒र्हस्त॑ आ॒द॒धे।**
**आ॒त्मा यख्ष्म॑स्य नश्यति पु॒रा जी॑व॒गृभो॑ यथा ॥ ६ ॥**

**यत्। अ॒हम्। वा॒जय॑न्। इ॒माः। ओष॑धीः। हस्ते॑। आ॒द॒धइत्या॑+द॒धे॥ आ॒त्मा। यख्ष्म॑स्य। न॒श्य॒ति॒। पु॒रा। जी॒व॒गृ॒भइति॑जीव+गृभ॑ः। य॒था॒॥ ६॥**

यदाऽहमिमा ओषधीः मन्त्रवचनैर्वाजयन् बलमादधानः हस्ते गृह्णामि तदा यख्ष्मस्य आत्मा नश्यति। क्षकारं दाक्षिणात्यास्तैत्तिरीयाः ख्षकारमाहुः। अधिकमस्मत्कृते रुद्रप्रपाठकभाष्ये। यदज्ञायमानं सदन्तः पीडयति तद्यक्ष्मम्। आमय इत्येतत्। तस्य स्वरूपमेव नश्यति पुरा नशिष्यति। यथा जीवं गृह्णातीति जीवगृभो दुष्टग्रहस्याऽत्मा नशिष्यति॥ ६॥

**यदोषधयः सङ्गच्छन्ते राजानः समिताविव ।**
**विप्रः स उच्यते भिषग् रक्षोहामीवचातनः ॥ ७ ॥**

**यत् । ओषधयः । सङ्गच्छन्तइतिसम्+गच्छन्ते । राजानः । समिता-वितिसम्+इतौ । इव ॥ विप्रः । सः । उच्यते । भिषक् । रक्षोहेतिरक्षः+हा । अमीवचातनइत्यमीव+चातनः ॥ ७ ॥**

समितौ सङ्ग्रामे यथा राजानः दुष्टनिग्रहाय सङ्गच्छन्ते तथा यत् येन ओषधयः व्याधिनिग्रहाय परस्परं सङ्गता भवन्ति स विप्रः रोगस्य तन्निदानस्य तत्परिहारस्य च ज्ञानी भिषिगित्युच्यते । भिषज्यतीति भिषक् । भिषज रुग्जये । बिभेत्यस्मात् रोग इति भिषगित्यपि निर्वदन्ति । विप्रातीति विप्रः स भिषगिति धन्वन्तरिः, प्राणः, रुद्रश्च । रोगहेतूनां दुःखहेतूनां च रक्षसां हन्ता । अमीवं रोगं पापं दुःखं वा चातयति शातयतीति अमीवचातनः ॥ ७ ॥

**निष्कृतिर्नाम वो माताऽथा यूयꣳ स्थ सङ्कृतीः ।**
**सराः पतत्रिणीः (२) स्थन यदामयति निष्कृत ॥ ८ ॥**

**निष्कृतिरितिनिः+कृतिः । नाम । वः । माता । अथ । यूयम् । स्थ । सङ्कृती-रितिसम्+कृतीः ॥ सराः । पतत्रिणीः (२) । स्थन । यत् । आमयति । निरिति । कृत ॥ ८ ॥**

वो माता उत्पत्तिस्थानमियं पृथिवी स्वयं निष्कृतिर्नाम । सर्वपापानां निराकृतिः प्रतिक्रिया वा । 'मृत्तिके हन मे पापम्' इत्यादेः । अथच माता निर्माता भगवानपि निष्कृतिर्नाम । निश्चिता निष्कृष्टा च तस्य कृतिः । न क्वापि सन्दिग्धता सङ्कीर्णता वा । अथ तस्माद् यूयमपि सङ्कृतयः स्थ । असमीचः समीचः कुर्वन्तीति । पतत्रवत्य इव ऊर्ध्वमधश्च सरन्ति चरन्तीति तादृशो भवथ । अतो यत् कश्चिदामयति आमयवान् भवति तदा तं निष्कृत निरामयं कुरुत । अम रोगे ॥ ८ ॥



**अन्या वो अन्यामवत्वन्यान्यस्या उपावत ।**
**ताः सर्वा ओषधयः संविदाना इदं मे प्रावता वचः ॥ ९ ॥**

**अन्या । वः । अन्याम् । अवतु । अन्या । अन्यस्याः । उपेति । अवत ॥ ताः । सर्वाः । ओषधयः । सँव्विदानाइतिसम्+विदानाः । इदम् । मे । प्रेति । अवत । वचः ॥ ९ ॥**

अथ युष्माकमेव परस्परपीडायां जातायाम्, अन्या युष्मास्वेका अन्यामवतु रक्षतु । तदर्थमेका अपरामवतु प्रविशतु । अन्या अन्यस्या उपकाराय भवत । एवं परस्परं उपतापमवत नाशयत । एवं सर्वा ओषधय उपावत उपगत्य नोऽप्यवत । संविदानाः सर्वज्ञा यूयमिदं मे वचनं प्रावत रक्षत यथार्थं कुरुत । अव रक्षे । अव प्रवेशे । अव गतौ । अव हिंसायाम् । अत्र तृतीयचरणो द्वादशाक्षर इति बृहती च्छन्दः ॥ ९ ॥

**उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते ।**
**धनꣳ सनिष्यन्तीनामात्मानं तव पूरुष ॥ १० ॥**

**उदिति । शुष्माः । ओषधीनाम् । गावः । गोष्ठादितिगो+स्थात् । इव । ईरते ॥ धनम् । सनिष्यन्तीनाम् । आत्मानम् । तव । पूरुष ॥ १० ॥**

शुष्यत्येभिरामय इति शुष्मा रोगनिरोधशक्तयः । ओषधीनां शुष्मा ओष-धीभ्य उदीरते उद्गत्य आगच्छन्ति अस्मानवितुम् । स्वस्थानादिव गावः । ईर गतौ । कीदृशामोषधीनाम्? हे भिषक्पुरुष, आत्मीयं शुष्माख्यं धनं तव समर्पयितुमिच्छन्तीनाम् ॥ १० ॥

**अति विश्वाः परिष्ठाः स्तेन इव व्रजमक्रमुः ।**
**ओषधयः प्राचुच्यवुर्यत् किञ्च तनुवाꣳ रपः ॥ ११ ॥**

**अतीति । विश्वाः । परिष्ठाइतिपरि+स्थाः । स्तेनः । इव । व्रजम् । अक्रमुः ॥ ओषधयः । प्रेति । अचुच्यवुः । यत् । किम् । च । तनुवाम् । रपः ॥ ११ ॥**

गा अपहर्तुं स्तेनो व्रजमिव गोष्ठं यथाऽतिक्रामत्यविज्ञातः सन् तथा परितः स्थिता इमा विश्वाः सर्वा ओषधयः रोगजातं अत्यक्रमुः अत्यक्रमिषुः अतिक्रामन्तीत्यर्थः । लडर्थे लुङ् । 'छन्दसि लुङ्लङ्लिटः' (अ.सू.३.४.६) इति स्मरणात् । अतिक्रम्य चोषधयः तनूनां यत् किञ्च रपः रोगाख्यं दुरितं तत् प्रच्यावयन्तीति ॥ ११ ॥

**या(३)स्ते॑ आत॒स्थुरा॒त्मानं॒ या आ॑विवि॒शुः परुः॑परुः ।**
**तास्ते॒ यक्ष्मं॒ वि बा॑धन्तामु॒ग्रो म॑द्ध्यम॒शीरि॑व ॥ १२ ॥**

**याः (३) । ते॒ । आ॒त॒स्थुरित्या॑+त॒स्थुः । आ॒त्मान॑म् । याः । आ॒वि॒वि॒शुरि॑त्या॑+ वि॒वि॒शुः । परुः॑परु॒रिति॒परुः॑+परुः ॥ ताः । ते॒ । यक्ष्म॑म् । वीति॑ । बा॒धन्ता॒म् । उ॒ग्रः । म॒द्ध्यम॒शीरिति॑मद्ध्यम+शीः । इ॒व ॥ १२ ॥**

बीजं वपन् उप्यमानं सस्यं प्रत्याह वप्ता भिषक्–या ओषधिदेवताः तव आत्मानमास्थिताः, याश्च परुःपरुः पर्वणिपर्वणि शक्त्याधानाय आविष्टाः तास्ते रोपप्रतिबन्धकं यक्ष्मं दोषं विबाधन्ताम् । कथम्? मध्यमे स्थाने शेत इति मध्यमशीः । निष्पक्षपातो न्यायालयाध्यक्षः इत्यर्थः । यद्यप्युभयोः पक्षयोः मध्यस्थः । अथापि अपराधिषु शिक्षाविषये उग्रः । तद्वत् ओषधिदेवताः उग्राः सत्यः त्वद्दोषान् बाधन्तामिति । अथवा रोगग्रस्तं प्रति भिषगाह–तव स्वरूपे सन्निहिताः, तवाङ्गेषु प्रतिग्रन्थि रक्षन्त्य आविष्टाः त्वद्देहगं यक्ष्मं रोगं दुरितं च बाधन्तामोषधिदेवता इति । मध्यमे स्थाने हृदि मनसि वा शयानः उग्रः शिव इव । मध्यमः प्राणः । तस्मिन् शेत इति मध्यमशीः नारायणः । हृदयमध्ये शयनादेव प्राणोऽपि मध्यमः । प्राणनारायणावपि पापिषूग्रौ । 'पुण्येन पुण्यं लोकं नयति पापेन पापम्' इत्यादेः ॥ १२ ॥

**सा॒कं य॑क्ष्म॒ प्र प॑त श्ये॒नेन॑ किकि॒दी॒विना॑ ।**
**सा॒कं वात॑स्य ध्राज्या॑ सा॒कं न॑श्य नि॒हाक॑या ॥ १३ ॥**



**सा॒कम् । यक्ष्म॒ । प्रेति॑ । प॒त॒ । श्ये॒नेन॑ । कि॒कि॒दी॒विना॑ ॥ सा॒कम् । वात॑स्य । ध्राज्या॑ । सा॒कम् । न॒श्य॒ । नि॒हाक॒येति॑नि+हाक॑या ॥ १३ ॥**

किकिदीविना स्वर्णचूडेन चाषेण तथा श्येनेन शशादनेन च सह प्रपत विप्रकृष्टं पत दूरं गच्छ, गत्वा क्वापि प्रपाते पत इति भिषग् यक्ष्मं शपति । निकेतं हापयतीति निहाकया महतां तरूणामप्युन्मूलनसमर्थया वातस्य ध्राज्या च सह, साकं युगपन्नश्येति । अथवा नीचं स्थानं हापयतीति निहाकया दुरितसन्तत्या साकम्, वातस्य प्राणस्य ध्राज्या गदापातेन च साकं नश्य नरके पतेति । ध्रज गतौ । ध्राजयति पातयतीति ध्राजिः ॥ १३ ॥

**अ॒श्वा॒व॒तीꣳ सो॑मव॒तीमू॒र्ज्जय॑न्ती॒मुदो॑जसम् ।**
**आ वि॑थ्सि॒ सर्वा॒ ओष॑धीर॒स्मा अ॑रि॒ष्टता॑तये ॥ १४ ॥**

**अ॒श्वा॒व॒तीमित्य॑श्व+व॒तीम् । सो॒म॒व॒तीमिति॒सोम+व॒तीम् । ऊ॒र्ज्जय॑न्तीम् । उ॒दो॑जस॒मित्युत्+ओ॒ज॒स॒म् ॥ एति॑ । वि॒थ्सि॒ । सर्वाः॑ । ओष॑धीः । अ॒स्मै । अ॒रि॒ष्टता॑तय॒इत्य॑रि॒ष्ट+ता॒त॒ये ॥ १४ ॥**

पुनराह भिषक्– अश्वावतीमित्यादि । अश्वावतीं देहदार्ढ्यप्रदाम्, कामवर्धिनीं प्रजननशक्तिप्रदाम्, सोमवतीमाधिहराम्, मनःस्थैर्यप्रदाम्, ऊर्जयन्तीमनभिभाव्यां प्राणशक्तिप्रदाम्, उदोजसमोजस्वतीम् देहकान्तिवर्धनीं वीर्यवर्धनीं चेतीमाः सर्वा ओषधीराविथ्सि अवेदिषम् जानामि । ज्ञात्वा प्रयुनज्मि चास्मै रुग्णाय पुरुषाय अरिष्टतातये क्षेमङ्कराय कर्मणे अस्मै अस्य अरिष्टतातये क्षेमाभिवृद्धये वा ॥ १४ ॥

**याः फ॒लिनी॒र्य्या अ॑फ॒ला अ॑पु॒ष्पा याश्च॑ पु॒ष्पिणीः॑ ।**
**बृह॒स्पति॑प्रसूता॒स्ता नो॑ मुञ्च॒न्त्वꣳह॑सः ॥ १५ ॥**

**याः । फ॒लिनीः॑ । याः । अ॒फ॒लाः । अ॒पु॒ष्पाः । याः । च॒ । पु॒ष्पिणीः॑ । बृह॒स्पति॑प्रसू॒ता॒इति॒बृह॒स्पति॑+प्र॒सू॒ताः । ताः । नः॒ । मु॒ञ्च॒न्तु॒ । अꣳह॑सः ॥ १५ ॥**

बृहस्पतिना ब्रह्मणा वा सृष्टास्ता ओषधयो नोंऽहसः मोचयन्तु ॥ १५ ॥

या(४) ओषधयः सोमराज्ञीः प्रविष्टाः पृथिवीमनु ।
तासां त्वमस्युत्तमा प्र णो जीवातवे सुव ॥ १६ ॥

याः (४) । ओषधयः । सोमराज्ञीरितिसोम+राज्ञीः । प्रविष्टाइतिप्र+विष्टाः । पृथिवीम् । अनु ॥ तासाम् । त्वम् । असि । उत्तमेत्युत्+तमा । प्रेति । नः । जीवातवे । सुव ॥ १६ ॥

सोमराज्ञीः सोमदेवत्या या ओषधयः या अस्मदनुग्रहार्थं पृथिवीमनुप्रविष्टाः, प्रविश्य च रोहन्त्यः । तासां मध्ये त्वमुत्तमाऽसि । अतः त्वमस्माकं जीवा-तवे जीविताय जीवनौषधाय वा आरोग्यं प्रसुव प्रेरय देहीति यावत् । षू प्रेरणे ॥ १६ ॥

अवपतन्तीरवदन् दिव ओषधयः परि ।
यं जीवमश्नवामहै न स रिष्याति पूरुषः ॥ १७ ॥

अवपतन्तीरित्यव+पतन्तीः । अवदन् । दिवः । ओषधयः । परि ॥ यम् । जीवम् । अश्नवामहै । न । सः । रिष्याति । पूरुषः ॥ १७ ॥

दिवोऽवस्तात् पृथिवीं पतन्त्य आगच्छन्त्य ओषधिदेवताः परस्परमवदन् । किमिति? यमश्नवामहै रक्षार्थं व्याप्य तिष्ठामः स कदाऽपि न रिष्यतीति । अशू व्याप्तौ । अश्नवामहै इति लौकिकाः । निगदज्ञास्तु 'अश्नवामहै' इत्या-चक्षते । रिष हिंसायाम् । रिष्यति नश्यति । कदाऽपि न हिंसामनुभवतीति सार्वकालिकत्वं दीर्घार्थः ॥ १७ ॥

याश्चेदमुपशृण्वन्ति याश्च दूरं परागताः ।
इह सङ्गत्य ताः सर्वा अस्मै सं दत्त भेषजम् ॥ १८ ॥

याः । च । इदम् । उपशृण्वन्तीत्युप+शृण्वन्ति । याः । च । दूरम् । परागताइतिपरा+गताः ॥ इह । सङ्गत्येतिसम्+गत्य । ताः । सर्वाः । अस्मै । समिति । दत्त । भेषजम् ॥ १८ ॥



या ओषधिमानिन्यः अत्र स्थिताः । याश्चान्यैर्भिषग्भिराहूता इतः परावृत्य दूरं गताः । ताः सर्वा मत्प्रार्थनया पुनरिहागत्य सङ्गता भवत । अस्मै रुग्णाय पुरुषाय भेषजं रोगजयं सन्दत्त ॥ १८ ॥

मा वो रिषत् खनिता यस्मै चाहं खनामि वः (५) ।
द्विपच्चतुष्पदस्माक९ सर्वमस्त्वनातुरम् ॥ १९ ॥

मा । वः । रिषत् । खनिता । यस्मै । च । अहम् खनामि । वः ॥ द्विपदितिद्वि+पत् । चतुष्पदितिचतुः+पत् । अस्माकम् । सर्वम् । अस्तु । अनातुरमित्यना+तुरम् ॥ १९ ॥

भूमेः खनिता अहम्, अन्यो वा, खनित्रादिर्वा वो मा हिंसीत् । अरिषदिति रिषधातोर्लुङि रूपम् । माङ्योगेनाड्लोपः । यस्मै यदर्थं खनामि सोऽपि मा भूत् पापभाजनम् । द्विपत् ज्ञानिजातम्, चतुष्पत् गवाश्वमिति अजाविकमिति तत्सर्वं अनातुरं निरामयमस्तु आधिव्याधिमुक्तम् ॥ १९ ॥

ओषधयः सं वदन्ते सोमेन सह राज्ञा ।
यस्मै करोति ब्राह्मणस्त९ राजन् पारयामसि ॥ २० ॥

ओषधयः । समिति । वदन्ते । सोमेन । सह । राज्ञा ॥ यस्मै । करोति । ब्राह्मणः । तम् । राजन् । पारयामसि ॥ २० ॥

(रपः पतत्रिणीर्या अ९हसोयाः खनामिवोऽष्टादश च) संहत्य पदानि २६८ ।

॥ इति तैत्तिरीयाणामोषधिसूक्तं सम्पूर्णम् ॥

—०—

ओषधयः संवादमकुर्वन् सोमेन राज्ञा सह । चन्द्रमसा । किमिति? ब्राह्मणो वेदवेद्यो भगवान् यस्मै कृपां करोति रोगमुक्तोऽयं भूयादिति तं स्वामिन् सोम वयं पारयामः दुःखस्य पारगामिनं कुर्म इति ॥ २० ॥

इदमाचार्यगोविन्दः प्रमृष्टं शब्दतोऽर्थतः ।
वितेने विमलं भाष्यं गुरुदेवप्रसादभाक् ॥ ❋ ॥

**इत्याचार्यगोविन्दस्य कृतिषु ओषध्यनुवाकभाष्यं सम्पूर्णम् ॥**

—०—

## काण्वानामोषधिसूक्तम्

काण्वसंहितायां त्रयोदशेऽध्याये षष्ठोऽनुवाकः । आ षट्सप्तत्या ऋच आ शततमाम्(७६–१००) पञ्चविंशत्यृचः । बहुलं बाह्वृच्यपाठानुसारी । क्वचित्क्वचिदल्पतरः पाठभेदः । अधिके च द्वे ऋचौ । तथाहि मन्त्रक्रमः–

**हरिः ओ३म् ॥**

**या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा ।**
**मनै नु बभ्रूणामह९ शतं धामानि सप्त च ॥ १ ॥**

**शतं वो अम्ब धामानि सहस्रमुत वो रुहः ।**
**अधा शतक्रत्वो यूयमिमं मे अगदं कृता ॥ २ ॥**

**ओषधीः प्रति गृभ्णीत पुष्पवतीः प्रसूवरीः ।**
**अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ॥ ३ ॥**

**ओषधीरिति मातरस्तद्वो देवीरुपब्रुवे ।**
**सनेयमश्वं गां वास आत्मानं तव पूरुष ॥ ४ ॥**

---

ॐ ॥ बाह्वृच्येऽपठितानां पदानामृचां चात्र किञ्चिद्विवरणमिष्यते । 'कृता' इति दीर्घः अवधारणार्थः । कुरुतैवेति । 'दैर्घ्यं प्लुतं च हुङ्कारो बिन्दुरप्यवधारणे' इति स्मरणात् ॥ १–२ ॥ प्रतिगृभ्णीत । हस्य भः । प्रति गृह्णीत स्वीकुरुतेमां प्रार्थनाम् । 'अश्वा+इव' इति भिन्ने पदे याजुषाणाम् । बह्वृचानां तु नियतमिवेन नित्यसमासः ॥ ३–४ ॥

अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता ।
गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥ ५ ॥

यत्रौषधीः समग्मत राजानः समिता इव ।
विप्रः स उच्यते भिषग् रक्षोहामीवचातनः ॥ ६ ॥

अश्वावतीꣳ सोमावतीमूर्ज्जयन्तीमुदोजसम् ।
आवित्सि सर्वा ओषधीरस्मा अरिष्टतातये ॥ ७ ॥

उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते ।
धनꣳ सनिष्यन्तीनामात्मानं तव पूरुष ॥ ८ ॥

इष्कृतिर्नाम वो माताथो यूयꣳ स्थ निष्कृतीः ।
सीराः पतत्रिणी स्थन यदामयति निष्कृथ ॥ ९ ॥

अति विश्वाः परिष्ठा स्तेन इव व्रजमक्रमुः ।
ओषधीः प्राचुच्यवुर्य्यत् किं च तन्वो रपः ॥ १० ॥

---

वसतिष्कृता । ककारपकारयोः परयोः सस्य षः ॥ ५ ॥ समिता इव समिताविव । 'लोपः शाकल्यस्य' (अ.सू.८.३.१९) इति वकारलोपः ॥ ६ ॥ अश्वावतीः सोमावतीः । वकारे प्रत्ययाक्षरे परे अश्वसोमशब्दयोरन्त्यस्वरस्य दैर्घ्यम् । तथाहि प्रातिशाख्यम्–'अश्व-रति-मति-सुमति–' (३.९७) इत्यादि । 'विश्वदेवसोमौ वत्याम्' (३.११७) इति च ॥ ७–८ ॥ पतत्रिणी स्थन । पतत्रिणीः स्थन । 'खर्परे शरि वा लोपो वक्तव्यः' इति वार्त्तिकम् (अ.सू.८.३.३६) । तद् यथा– 'नित्यः सर्वगत स्थाणुः' इति गीतायाम् ॥ ९–१३ ॥



यदिमा वाजयन्नहमोषधीर्हस्त आदधे ।
आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥ ११ ॥

यस्यौषधीः प्रसर्प्पथाङ्गमङ्गं परुष्परुः ।
ततो यक्ष्मं विबाधध्व उग्रो मध्यमशीरिव ॥ १२ ॥

साकं यक्ष्म प्रपत चाषेण किकिदीविना ।
साकं वातस्य ध्राज्या साकं नश्य निहाकया ॥ १३ ॥

अन्या वो अन्यामवत्वन्यान्यस्या उपावता ।
ताः सर्वाः संविदाना इदं मे प्रावता वचः ॥ १४ ॥

याः फलिनीर्य्या अफला अपुष्पा याश्च पुष्पिणीः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥ १५ ॥

मुञ्चन्तु मा शपथ्यादथो वरुण्यादुत ।
अथो यमस्य पड्वीशात् सर्वस्माद् देवकिल्बिषात् ॥ १६ ॥

अवयतीः समवदन्त दिव ओषधयस्परि ।
यं जीवमश्नवामहै न स रिष्याति पूरुषः ॥ १७ ॥

या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः ।
तासामसि त्वमुत्तमारं कामाय शꣳ हृदे ॥ १८ ॥

---

उपावता । दैर्घ्यमवधारणार्थमित्युक्तम् । प्रावता वचः । वकारात् परः परे 'अवता' इति दीर्घः (प्रा.३.९७) ॥ १४–१६ ॥ अवयतीः अधो भूलोकं गच्छन्त्यः ओषधिदेवताः समवदन्त संवदन्ते ॥ १७–२० ॥

या ओष॑धी॒ः सोम॑राज्ञी॒र्विष्ठि॑ताः पृथि॒वीमनु॑ ।
बृ॒हस्पति॑प्रसूता अ॒स्यै सन्द॑त्त वी॒र्य्य॑म् ॥ १९ ॥

याश्चे॒दमु॑पशृ॒ण्वन्ति॒ याश्च॑ दू॒रं परा॑गताः ।
सर्वा॑ः स॒ङ्गत्य॑ वीरुधो॒स्यै सन्द॑त्त वी॒र्य्य॑म् ॥ २० ॥

ना॒श॒यि॒त्री ब॒लास॒स्यार्श॑स उ॒पचिता॑मसि ।
अथो॑ श॒तस्य॒ यक्ष्मा॑णां पाका॒रोर॑सि॒ नाश॑नी ॥ २१ ॥

मावो॑ रिषत् खनि॒ता यस्मै॑ चा॒हं खना॑मि वः ।
द्वि॒पच्चतु॑ष्पद॒स्माकꣳ॑ सर्व॑मस्त्वनातु॒रम् ॥ २२ ॥

ओष॑धय॒ः संव॑दन्ते॒ सोमे॑न स॒ह राज्ञा॑ ।
यस्मै॑ कृ॒णोति॑ ब्राह्म॒णस्तꣳ रा॑जन् पारयामसि ॥ २३ ॥

त्वां ग॑न्ध॒र्वा अ॑खन॒ꣳस्त्वामिन्द्र॒स्त्वां बृ॒हस्पति॑ः ।
त्वामौ॑षधे॒ सोमो॒ राजा॑ वि॒द्वान् यक्ष्मा॑दमुच्यत ॥ २४ ॥

त्वमु॑त्त॒मास्यौ॑षधे॒ तव॑ वृ॒क्षा उप॑स्तयः ।
उप॑स्तिरस्तु॒ सो॒ऽस्माक॒ं यो अ॒स्माँ३ अ॑भि॒दास॑ति ॥ २५ ॥

—०—

बलासमिति शक्तिहीनता । अर्शा इति मूलव्याधिः । उपचिदित्यतिपीनता । यक्ष्माणीति स्फुटमविदितमूला आमयाः । पाकारुरित्यपचनम् ॥ २१–२३ ॥ गां धारयन्तीति गन्धर्वा भूमेर्धारकशक्तयो देवाः । विशेषतः वाचो धारकाः गरुडशेषरुद्राः । अखनन् खनित्वा भूमौ स्थापितवन्तः । इन्द्रः परमेश्वरः



नारायणः । बृहस्पतिः ब्रह्मा । यथाश्रुतार्थग्रहणेऽपि न दोषः । एवं विद्वान् यक्ष्मात् समस्तरोगाद् विमुच्यत इति ॥ २४–२५ ॥

**इदमाचार्यगोविन्दः प्रमृष्टं शब्दतोऽर्थतः ।**
**काण्वीयौषधिसूक्तस्य लघुभाष्यमभाषत ॥**

**इत्याचार्यगोविन्दस्य कृतिषु काण्वीयस्य**
**ओषधिसूक्तस्य भाष्यं सम्पूर्णम् ॥**

—०—

## माद्ध्यन्दिनानामोषध्यनुवाकः

माद्ध्यन्दिनसंहितायां द्वादशेऽद्ध्याये षष्ठोऽनुवाकः । आ पञ्चसप्तताया ऋच आ एकोत्तरशततमाम् (७५–१०१) सप्तविंशत्यृचोऽनुवाकः । काण्वसंहिताया नातिभिन्नमपि माद्ध्यन्दिनानामुच्चारणवैविध्यदर्शनाय पृथक् प्रदर्श्यते–

**हरिः ओ३म् ॥**

**या ओषधीः पूर्व्वा जाता देवेभ्यस्त्रियुगं पुरा ।**
**मनै नु बब्भ्रूणामहꣳ शतं धामानि सप्त च ॥ १ ॥**

**शतं वो अम्ब धामानि सहस्रमुत वो रुहः ।**
**अधा शतक्रत्त्वो यूयमिमं मे अगदं कृत ॥ २ ॥**

---

ॐ ॥ अथातो माध्यन्दिनानामोषधिसूक्तोऽप्यनुक्तार्थानां पदानामृचां चार्थं लेशतो वक्ष्यामः ।

ऋष्यादिकमुक्तं सर्वानुक्रमसूत्रे–'या ओषधीः सप्तविꣳशतिरनुष्टुभः, ओषधिस्तुतिः, आथर्वणो भिषक्, मुञ्चन्तु, बन्धुः, द्वादशानारभ्याधीताः' इति । ओषधिमानिन्यो देवताः, आथर्वणो भिषगृषिरिति सर्वं समानम् । बाह्वृच्ये त्रयोविंशतिरनुष्टुभः, काण्वे पञ्चविंशतिः, अत्र सप्तविंशतिरिति भेदः । विशेषान्तरं चाऽह–'मुञ्चन्तु बन्धुः' 'या ओषधीः' इत्यादितोऽनारभ्य, किन्तु 'मुञ्चन्तु मा' इत्येतामृचमेवाऽरभ्य यद्यधीयते तदा द्वादशर्चमेकं सूक्तं भवति । तदा तस्य सूक्तस्य बन्धुर्नाम ऋषिरिति । माध्यन्दिना अपि प्रायो बाह्वृच्यप्रवणाः । आदितः सप्तदशर्चः एकरूपाः ॥ १–१७ ॥



**ओषधीः प्रति मोदद्ध्वं पुष्पवतीः प्रसूवरीः ।**
**अश्श्वा इव सजित्त्वरीर्व्वीरुधः पारयिष्णवः ॥ ३ ॥**

**ओषधीरिति मातरस्तद्वो देवीरुप ब्रुवे ।**
**सनेयमश्श्वं गां व्वास आत्मानं तव पूरुष ॥ ४ ॥**

**अश्श्वत्थे वो निषदनं पर्ण्णे वो वसतिष्कृता ।**
**गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥ ५ ॥**

**यत्रौषधीः समग्ग्मत राजानः समिताविव ।**
**व्विप्रः स उच्यते भिषग्ग्रक्षोहामीवचातनः ॥ ६ ॥**

**अश्श्वावतीꣳ सोमावतीमूर्ज्जयन्तीमुदोजसम् ।**
**आऽवित्त्सि सर्व्वा ओषधीरस्मा अरिष्टतातये ॥ ७ ॥**

**उच्छुष्म्मा ओषधीनां गावो गोष्ठादिवेरते ।**
**धनꣳ सनिष्यन्तीनामात्मानं तव पूरुष ॥ ८ ॥**

**इष्कृतिर्न्नाम वो माताऽथो यूयꣳ स्त्थ निष्कृतीः ।**
**सीराः पतत्त्रिणी स्त्थन यदामयति निष्कृथ ॥ ९ ॥**

**अति विश्श्वाः परिष्ठा स्तेन इव व्व्रजमक्क्रमुः ।**
**ओषधीः प्राचुच्च्यवुर्य्यत्किञ्च तन्न्वो रपः ॥ १० ॥**

**यदिमा व्वाजयन्नहमोषधीर्हस्त आदधे ।**
**आत्मा यक्ष्मस्य नश्श्यति पुरा जीवगृभो यथा ॥ ११ ॥**

यस्यौषधीः प्प्र॒सर्प्प॒थाङ्ग॑मङ्ग॒ं परु॑ष्परुः ।
ततो॒ यक्ष्म॒ं व्विबा॑धध्व उ॒ग्ग्रो म॑द्ध्यम॒शीरि॑व ॥ १२ ॥

सा॒कँ य्य॑क्ष्म॒ प्प्रप॑त॒ चाषे॑ण किकिदी॒विना॑ ।
सा॒कं व्वात॑स्य॒ द्ध्राज्ज्या॑ सा॒कन्न॑श्श्य नि॒हाक॑या ॥ १३ ॥

अ॒न्या वो॑ अ॒न्याम॑वत्त्व॒न्यान्यस्या॒ उपा॑वत ।
ताः सर्व्वा॑ः संविदा॒ना इ॒दम्मे॒ प्प्राव॑ता॒ व्वच॑ः ॥ १४ ॥

याः फ॒लिनी॒र्य्या॑ अ॑फ॒ला अ॑पु॒ष्प्पा याश्च॑ पु॒ष्प्पिणी॑ः ।
बृ॒हस्प्पति॑प्रसूता॒स्ता नो॑ मुञ्च॒न्त्वꣳ॒ह॑सः ॥ १५ ॥

मु॒ञ्चन्तु॑ मा शप॒त्थ्या॒॒दथो॑ व्वरु॒ण्या॑दु॒त ।
अथो॑ य॒मस्य॒ पड्॒ड्वी॑शा॒त्त्सर्व्व॑स्माद्देवकिल्ब्बि॒षात् ॥ १६ ॥

अ॒वपत॑न्तीरवदन् दि॒व ओष॑धय॒स्प्परि॑ ।
यं जी॒वम॒श्नवा॑महै॒ न स रि॑ष्ष्याति॒ पूरु॑षः ॥ १७ ॥

या ओष॑धी॒ः सोम॑राज्ञीर्ब्ब॒ह्वीः श॒तवि॑चक्षणाः ।
तासा॒मसि॒ त्त्वमु॑त्त॒मारं कामा॑य॒ शꣳ॒ हृ॒दे ॥ १८ ॥

या ओष॑धी॒ः सोम॑राज्ञी॒र्व्विष्ठि॑ताः पृथि॒वीमनु॑ ।
बृ॒हस्प्पति॑प्प्रसूता अ॒स्यै सन्द॑त्त व्वी॒र्य्य॑म् ॥ १९ ॥

अष्टादश्याम् ‘त्वमस्युत्तमा’ इति बाह्वृच्यः पाठः अत्र ‘असि त्वमुत्तमा’ बभूव ॥ १८–२० ॥



याश्श्चे॒दमु॑पशृ॒ण्ण्वन्ति॒ याश्श्च॑ दू॒रं परा॑गताः ।
सर्व्वा॑ः स॒ङ्गत्त्य॑ व्वीरुधो॒स्यै सन्द॑त्त व्वी॒र्य्य॑म् ॥ २० ॥

मा वो॑ रिषत्त्खनि॒ता यस्म्मै॑ चा॒हं खना॑मि वः ।
द्वि॒पाच्चतु॑ष्प्पाद॒स्माक॒ꣳ सर्व्व॑मस्त्त्वनातु॒रम् ॥ २१ ॥

ओष॑धय॒ः सम॑वदन्त॒ सोमे॑न स॒ह राज्ञा॑ ।
यस्म्मै॑ कृ॒णोति॑ ब्ब्राह्म॒णस्तꣳ रा॑जन्न्पारयामसि ॥ २२ ॥

ना॒श॒यि॒त्री ब॒लास॒स्यार्श॑स उप॒चिता॑मसि ।
अथो॑ श॒तस्य॒ यक्ष्मा॑णां पाका॒रोर॑सि॒ नाश॑नी ॥ २३ ॥

त्वां ग॑न्ध॒र्व्वा अ॑खनँ॒स्त्त्वामिन्द्र॒स्त्त्वां बृ॒हस्प्पति॑ः ।
त्वामो॑षधे॒ सोमो॒ राजा॑ व्वि॒द्वान्न्यक्ष्मा॑दमुच्च्यत ॥ २४ ॥

सह॑स्व मे॒ अरा॑ती॒ः सह॑स्व पृतनाय॒तः ।
सह॑स्व॒ सर्व्वं॑ पा॒प्मान॒ꣳ सह॑मानास्योषधे ॥ २५ ॥

द्विपच्चतुष्पत्’ इति बह्वृचाः काण्वाश्च । ‘द्विपाच्चतुष्पात्’ इति माध्यन्दिनाः । दीर्घमात्रं विशिष्यते ॥ २१ ॥ समवदन्त सार्वकालिको लङ् । संवदन्ते ॥ २२ ॥ इतश्चतस्र ऋचो बह्वृचा न पठन्ति । आद्यमृग्द्वयमेव काण्वाः पठन्ति । व्याख्यातं च तत्र ॥ २३–४ ॥ मे अरातीः दुष्टशक्तीः रुजो वा सहस्व अभिभावय । अरातिः सा या न राति सुखम् । पृतनया सहाऽयान्तीति पृतनायतः ससैन्यानन्यानपि शत्रूनभिभावय । एवं सर्वं पाप्मानभिभावय । यत ओषधे त्वमसि सहमाना अभिभावयित्री दोषाणाम् ॥ २५ ॥

**दी॒र्घायु॑स्त ओषधे खनि॒ता यस्मै॑ च त्वा॒ खना॑म्म्य॒हम्।**
**अथो॒ त्वं दी॒र्घायु॑र्भू॒त्वा श॒तव॑ल्शा॒ व्विरो॑हतात् ॥ २६ ॥**
**त्वमु॑त्त॒मास्यो॑षधे॒ तव॑ व्वृ॒क्षा उप॑स्तयः।**
**उप॑स्तिरस्तु॒ सो॒ऽस्माकं॒ य्यो अ॒स्म्माँ३ अ॑भि॒दास॑ति ॥ २७ ॥**

हे ओषधे ते खनिता दीर्घायुरस्तु यस्मै खनामि सोऽपि दीर्घायुरस्तु। त्वमपि दीर्घायुर्भूत्वा शतवल्शा विरोह। वलन्ते परितः चरन्तीति वल्शाः शाखोपशाखाः ॥ २६–२७॥

* * *

मैत्रायणीयाः काठकाः कपिष्ठलकठाश्च सूक्तमिदं पठन्ति । अथापि तच्छाखाध्यायिनः सम्प्रति नात्र दृश्यन्त इति न तेषामिह पृथग्ग्रहणम्।

तथाहि मैत्रायणीयसंहितायां द्वितीयकाण्डे सप्तमे प्रपाठके सप्तमोऽनुवाकः (२.७.१६६–११३) अष्टादशर्चः ओषधिसूक्तानुवाकः । परन्तु अन्यासु शाखास्वदृष्टं ऋग्द्वयं तत्र पठ्यते। तद् यथा–

**दिवं॑ ब्रूमो॒ नक्ष॑त्राणि॒ भूमिं॑ऽ य॒क्षाणि॒ पर्व॑तान्।**
**स॒मु॒द्रान्न॒द्यो॑ वेश॒न्ताँ॑ऽस्ते नो॑ मुञ्च॒न्त्वꣳह॑सः ॥ १७ ॥**
**ब्रूमो राजा॑न॒ꣳ वरु॑णं धा॒तार॑मुत पू॒षण॑म्।**
**त्वष्टा॑रमग्रीयं ब्रू॒मस्ते नो॑ मुञ्च॒न्त्वꣳहसः ॥ १८ ॥**

द्यावापृथिव्याद्यभिमानिन्यो देवता अंहसो मोचयन्त्वित्यर्थः। वेशन्ताः अल्पानि सरांसि। तदभिमानिन्यः। 'वेशन्तस्त्वल्पपल्वले' इत्यभिधानम्। सर्वत्र गतो भगवानित्येतत्। स च पञ्चधाऽवस्थित इति पञ्चात्मकं तं स्तौति। मुक्तौ राजतीति राजा नारायणः। आवृणोतीति वरुणो वासुदेवः। धारणात् धाताऽनिरुद्धः। 'धाता गर्भं दधातु ते' इति श्रवणात्। सृष्ट्वा पोषणात् पूषा प्रद्युम्नः। त्वक्षणात् त्वष्टा सङ्कर्षणः। 'त्वष्टा रूपाणि पिंशतु' इति श्रवणात्। अग्रीयमग्रे भवमिति पञ्चानामपि विशेषणम् ॥



* * *

कठा अपि पठन्ति। काठकसंहितायां षोडशे स्थानके त्रयोदशोऽनुवाकः अष्टादशर्चः (१६.१३.१५२–१६९) ओषधिसूक्तम्। अत्राप्यष्टादशो मन्त्रोऽन्यत्रा-पठितः–

**याः सोम॑राज्ञी॒र्वरु॑णस्य॒ राज्ञो॒ यासां॒ विश्वे॑ दे॒वा अधि॑पतयश्च॒ सर्वे॑।**
**या अ॒न्तरि॑क्षे दि॒वि याः पृ॑थि॒व्यां ता न॑स्तु॒ता ओष॑धीः पावयन्तु ॥ १८ ॥**

यासां सोमो राजाऽधिपतिः, यासां च वरुणो राजाऽधिपतिर्विशेषतो जले जातानाम्, यासां विश्वे जलमानिनो देवा देव्यश्चेति सर्वेऽधिपतयः, ता ओषधयः अस्माभिः स्तुता नः पावयन्तु। अथचाध्यात्मं सोमः पवमानः। सोमः पशुपतिः, सोमश्चन्द्रमाः, चन्द्रमण्डलगो धन्वन्तरिश्च।

नक्तं तसमाऽऽवृणोतीति वरुणः सूर्यः। सूर्यातपेन हि विविधवर्णा ओषधय एधन्ते। सूर्यगतो नारायणः, वायुश्च, शिवश्च। अथ सर्वगुणपूर्णा सर्वेऽपि देवाः। सर्वदेवगश्च भगवान् ॥

* * *

कपिष्ठलकठा अपि पठन्ति। सम्प्रत्यंशत उपलब्धायां कपिष्ठलकठसंहिता-याम्, पञ्चविंशेऽध्याये (चतुर्थाष्टकस्य प्रथमेऽध्याये) सूक्तमिदं पञ्च-दशर्चं चतुर्थानुवाकतया पठ्यते। अल्पीयान् पाठभेदः। सोऽपि स्फुटार्थ इत्यलम् ॥

इदमचार्यगोविन्दः प्रमृष्टं शब्दतोऽर्थतः ।
माध्यन्दिनानां सूक्तेऽपि लघुभाष्यमरीरचत् ।

**इत्याचार्यगोविन्दस्य कृतिषु माध्यन्दिनानामोषधिसूक्तस्य लघुभाष्यं समाप्तम् ॥**

—०—

# ८. घर्म्मसूक्तम्



ॐ ॥ घर्मसूक्तोदितं कर्मफलदं शर्मदं सताम्।
प्रणम्य व्याकरिष्यामो महार्थं सूक्तमिष्टदम्॥

अथातो घर्मसूक्तं व्याख्यास्यामः।

दशममण्डले ११४तमं दशर्चं सूक्तम्। घर्माख्यो भगवान् देवता। सध्रिर्वैरूप ऋषिः। घर्मस्तापसो वा। चतुर्थी जगती। अवशिष्टास्त्रिष्टुभः। तथाह्यनुक्रमणिका– 'घर्मा सध्रिस्तापसो वा घर्मो वैश्वदेवं चतुर्थी जगती' इति।

## हरिः ओ३म्॥

**घर्म्मासमन्तात्रिवृतंव्यापतुस्तयोर्जुष्टिम्मातरिश्वाजगाम।
दिवस्पयोदिधिषाणाऽअवेषन्विदुर्देवास्सहसामानमर्कम्॥ १॥**

**घर्म्मा। सम्+अन्ता। त्रि+वृतम्। वि। आपतुः। तयोः। जुष्टिम्। मात-रिश्वा। जगाम॥ दिवः। पयः। दिधिषाणाः। अवेषन्। विदुः। देवाः। सह+सामानम्। अर्कम्॥ १॥**

घृष्टत्वेन वेदार्थमीमांसामथितत्वेन मीयेते इति घर्मौ। तामसानां तापकौ च। जगद्धर्षकत्वेन च मीयेते। 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इति सूत्रम्। 'गुहा सन्तं मातरिश्वा मथायति' इति च श्रुतिः। समं सर्वत्र ततौ समन्तौ। समन्तात् विद्यमानौ वा। त्रिवृदात्मकं तेजोबन्नात्मकं जगद्व्यापतुः। शरीरं च। प्रकृतिपुरुषकालमानिन्यः श्रीभूदुर्गाश्च। कालतो देशतो गुणतः शक्तितश्च



व्यापतुः। मातरि निर्मातरि भगवति विषये श्वयति अवगच्छति, तदाज्ञानिमित्तं सदागतिर्भवति, तज्ज्ञानेन च नित्यं वर्धत इति मातरिश्वा। मातरि अन्तरिक्षे श्वयति गच्छति। मातरि वा गर्भे श्वयति वर्धते। मातरि वा वाचि श्वयति सञ्चरति। स मातरिश्वा तयोः भगवद्रूपयोः जुष्टिं प्रीतिं सेवां च जगाम। 'घृष्टौ घृष्टत्वेन घर्षकत्वेन च मितौ। समन्तौ सम्पूर्णौ। प्रकृतिपुरुषकालव्यापिनौ यौ देशतः कालतो गुणतः शक्तितश्च। तयोः सेवां मातरिश्वा जगाम' इति तत्वप्रदीपे पण्डिताचार्यवचनम्।

दिवः द्युदेव्या वाचः पयोऽर्थरूपं दिधिषाणा धित्सन्तः पिपासन्तः। धेट् पाने। सन्नन्तात् शानच्। देवा ज्ञानिनः अवेषन्। द्विरूपं तमेकमवनमैच्छन्। अन्वैच्छन् वा। तस्मिन्नवेषन् भक्तिरसं सिषिचुरिति वा। विषु सेचने। यतस्ते विदुः सह समानमर्कम्। अर्कते प्रकाशत इत्यर्कः। अर्च्यत इति वाऽर्कः। अरं कं सुखं यस्येति वा। सहसामानं वायुना सहितम्। एष उ एव साम। 'वागेवर्क् तच्छ्रुतौ प्रोक्ता प्राणः सामेति कीर्तितः' इति। 'द्युदेव्याः वायुपत्न्याः स्तन्यं पयो दिधिषाणाः पिपासन्तो देवा द्विरूपं तमेकमवेषन् अवनमैच्छन्। अन्वैच्छन्निति वा। विदुश्च तमर्कम्, अरं कंरूपम्, सहसामानं सहवायुम्। 'एष उ एव साम' इति हि श्रुतिः' इति च तत्वप्रदीपे॥ २॥

**तिस्रोदेष्ट्रायनिरृतीरुपासतेदीर्घश्रुतोविहिजानन्तिवह्नयः।
तासान्निचिक्युःकवयोनिदानम्परेषुयागुह्येषुव्रतेषु॥ २॥**

**तिस्रः। देष्ट्राय। निः+ऋतीः। उप। आसते। दीर्घ+श्रुतः। वि। हि। जानन्ति। वह्नयः॥ तासाम्। नि। चिक्युः। कवयः। नि+दानम्। परेषु। याः। गुह्येषु। व्रतेषु॥ २॥**

देष्ट्राय उपदेशकाय ज्ञानिने, अध्यात्मज्ञाय। तन्मार्ग इति यावत्। तिस्रः निर्ऋतीः ज्ञानमार्गप्रतिकूला इति हि विजानन्ति। वहन्ति जगदिति देवाः वहन्ति स्व-हृदये परमिति विद्वांसो वा वह्नयः। दीर्घकालं श्रुत्वा य उपासते। कास्तिस्रः? अविद्या कामः कर्म च। सत्वरजस्तमांसि, कामः क्रोधो लोभ इति वा। 'तस्मादेतत्

त्रयं त्यजेत्' इति स्मरणात्। तेजोबन्नानि वा। तासां निदानं कवयो निश्चितवन्तः। परेषु या गुह्येषु आवृतेषु स्थिताः। इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते। तेजोऽबन्नानां निदानं च भगवानेव। याश्च परेषु गुह्येषु रमावायुशिवेषु स्थिताः। अत्र पूर्वार्धे चतुर्विंशतिरक्षराणि, तृतीय एकादश तुरीये दश। संहत्य पञ्च चत्वारिंशदक्षराणि। 'गुहियेषु' इति व्यूहे षट्चत्वारिंशत्। तेन विराड्जगती स्यात्। स्वराट् त्रिष्टुप् स्यात्। अव्यूहेन भुरिक् त्रिष्टुब् वा। अथापि अनुक्रमणिकाकारः केवलां त्रिष्टुभमाह॥ २॥

**चतुष्कपर्दायुवतिस्सुपेशाघृतप्रतीकावयुनानिवस्ते।**
**तस्यांसुपर्ण्णावृषणानिषेदतुर्य्यत्रदेवादधिरेभागधेयम्॥ ३॥**

**चतुः+कपर्दा। युवतिः। सु+पेशाः। घृत+प्रतीका। वयुनानि। वस्ते॥ तस्याम्। सु+पर्ण्णा। वृषणा। नि। सेदतुः। यत्र। देवाः। दधिरे। भाग+धेयम्॥ ३॥**

चतुःशिखण्डा युवतिः। चत्वारो वेदा एव कपर्दाः। कं परं परमानन्दं भगवन्तं ददतीति। अथाप्यसुराणां कं परमात्मानं पर्दन्त इव। तत्त्वमसि निर्गुणश्चेत्यादिना। पर्द कुत्सिते शब्दे। नित्ययौवना। युवानं भगवन्तं तनोति मनसा विस्तारयतीति। यौति भगवता नित्ययुक्ता भवति वा। नित्ययूना भगवता तिरानन्दो यस्या वा। 'तीत्यानन्दः समुद्दिष्टः' इति वचनात्। सुपेशा सुपुष्टाङ्गा। घृतप्रतीका दीप्ताङ्गा शोभमाना। घृ दीप्तौ। जिघर्ति। घृतस्य दीप्तस्य भगवतः साक्षात्प्रतीकभूता वा। घ्रियत इति घृतं जलं वा। 'घृतमाज्याम्बुदीप्तेषु'। तद्धा प्रतीकं यस्याः। 'अप एव ससर्जादौ तासु वीर्यमवासृजत्'। सा वयुनानि वस्ते स्वयं ज्ञानस्वरूपा। मेधया पिहित इतिवत्। संसारिणां ज्ञानान्याच्छादयति च। सुपरणः सुपर्णः। सुपरानन्दः। स्वित्यानन्त्यम्। परेति दुःखासम्भेदः। द्विरूपो भगवानभिलषितवर्षणाद् वृषणः। तस्यां सदा निषण्णः यत्र यस्मिन् यस्यां वा देवाः स्वभागधेयं निदधुः। भगवान् हि सर्वेषां भाग्यनिधानम्। रमा च हि भाग्यदेवता। अत्रापि तृतीयचरणे द्वादशाक्षराणीति एकाक्षराधिका त्रिष्टुप्॥ ३॥



**एकस्सुपर्ण्णस्ससमुद्रमाविवेशसऽइदंविश्वम्भुवनंविचष्टे।**
**तम्पाकेनमनसापश्यमन्तितस्तम्माताररेळिढसऽउरेळिढमातरम्॥**
**॥ ४॥**

**एकः। सु+पर्ण्णः। सः। समुद्रम्। आ। विवेश। सः। इदम्। विश्वम्। भुवनम्। वि। चष्टे॥ तम्। पाकेन। मनसा। अपश्यम्। अन्तितः। तम्। माता। रेळ्हि। सः। ऊँइति। रेळ्हि। मातरम्॥ ४॥**

यौ द्वावुक्तौ स एक एव वस्तुतः। समुद्रं प्रळयार्णवम्, क्षीरसमुद्रम्, हृदयाकाशं वा आविवेश। सृष्ट्यनन्तरं संसाराख्यं च समुद्रम्। 'अम्भस्यपारे भुवनस्य मध्ये'। स इदं सर्वं जगत् साक्षाद् पश्यति। पक्वेन मनसा अन्तिक एवापश्यमित्याह ब्रह्मा। मन्त्रद्रष्टा वैरूपो घर्मो वा। तं माता सरस्वती लेढि अभिव्यञ्जनेनाऽस्वादयति। 'वाचो मा मातरः स्मृताः'। 'ಮೂಡು' इति भाषायाम्। स च तां लेढि बहुधा वर्ण्यमानो विहरति। अत्र प्रथमपादे त्रयोदशाक्षराणि द्वितीय एकादश। संहत्याष्ट चतुश्चत्वारिंशदक्षरेति जगती॥ ४॥

**सुपर्ण्णंविप्राꣳकवयोवचोभिरेकंसन्तम्बहुधाकल्पयन्ति।**
**छन्दांसिचदधतोऽअध्वरेषुग्रहान्त्सोमस्यमिमतेद्वादश॥ ५॥**

**सु+पर्ण्णम्। विप्राः। कवयः। वचः+भिः। एकम्। सन्तम्। बहुधा। कल्पयन्ति॥ छन्दांसि। च। दधतः। अध्वरेषु। ग्रहान्। सोमस्य। मिमते। द्वादश॥ ५॥**

विप्रा विशेषज्ञाः कवयः क्रान्तदर्शिनः एकमेव सन्तम्, अग्न्यादिभिर्नामभिर्वर्णयन्ति। छन्दांसि भगवत्प्रतिपादकानि हृदये दधतो विप्राः। सोमस्य ग्रहान् वा द्वादश दधतः छन्दांसि मिमते मीमांसन्ते। द्वादशात्मानं भगवन्तमेव तत्र ध्यायन्तः। अथवा सोमस्य मनसः द्वादश ग्रहा ग्रहणानि आग्रहा वा। तथाहि भागवते–'गन्धाकृतिस्पर्शरसश्रवांसि विसर्गगत्यत्त्यभिजल्पशिल्पाः। एकादशं स्वीकरणं ममेति मायामहं द्वादशमेकमाहुः' (५.११.१०) इति। एतद् द्वादशकं भगवदधीनत्वेन मीमांसन्ते॥ ५॥

**ष॒ट्त्रि॒शाँ॑श्च॑च॒तुर॑ऽक॒ल्पय॑न्त॒श्छन्दां॑सिच॒दध॑तऽआद्वा॒द॒शम् ।**
**य॒ज्ञंवि॒माय॑क॒वयो॑मनी॒षऽऋ॑क्सा॒माभ्या॒म्प्ररथं॑वर्त्तयन्ति ॥ ६ ॥**

ष॒ट्+त्रि॒शान् । च॒ । च॒तुर॑ः । क॒ल्पय॑न्तः । छन्दां॑सि । च॒ । दध॑तः । आ॒+द्वा॒द॒शम् ॥ य॒ज्ञम् । वि॒+माय॑ । क॒वय॑ः । म॒नी॒षा । ऋ॒क्+सा॒मा-भ्या॑म् । प्र । रथ॑म् । व॒र्त्त॒य॒न्ति॒ ॥ ६ ॥

षट्त्रिंशानित्यादि सोमग्रहपरतया व्याचक्षते याज्ञिकाः । कामं व्याचक्षताम् । तदपि विवक्षितमेव । 'सोमस्य ग्रहान्' इति प्रस्तुतत्वात् । वयं तु मानसयज्ञरताः सर्वत्राध्यात्मिकमेवार्थं पश्यामः । तथाहि–'षट्त्रिंशान् षट्त्रिंशत्सङ्ख्याकानि तत्वानि भगवन्नियम्यानि मनसि चिन्तयन्तः । तथा चतुरः वासुदेवाद्या भगवन्मूर्तीः सर्वत्र नियामकत्वेन कल्पयन्तश्चिन्तयन्तः । तत्वानि चोक्तानि–'पुरुषोऽव्यक्तं च महानहङ्कारो मनस्तथा । दशेन्द्रियाणि शब्दाद्याः भूतेताः पञ्चविंशतिः । तत्वाख्याः कालमाये च नियतिर्मतिरेव च । विद्या कला प्रवृत्तिश्च द्वात्रिंशत्तत्वसङ्ग्रहः । स्फूर्तिः संवित् प्रतिष्ठा च शक्तिरित्यपराणि च । महालक्ष्मीस्वरूपाणि ह्येकदाश विदो विदुः' (तं.सा.सं.३.१२७–८) इति । अत्र पुरुष इति ब्रह्मवायू । महानिति च । अव्यक्तमिति सरस्वतीभारत्यौ । अहङ्कार इति गरुडशेषरुद्राः । मन इतीन्द्रकामौ । दशेन्द्रियेषु श्रोत्रमानी सोमः । त्वङ्मानी प्रवहः । चक्षुर्मानी सूर्यः । रसनामानी वरुणः । घ्राणमानिनावश्विनौ । वाङ्मानी वह्निः । पाणिमानी दक्षः । पादमानी इन्द्रसूनुर्जयन्तो यज्ञापरनामा । पायोर्मित्रः । उपस्थस्य स्वायम्भुवो मनुः । शब्दस्य बृहस्पतिः वायुपुत्रः प्राणश्च । स्पर्शस्यापानः । रूपस्य व्यानः । रसस्योदानः । गन्धस्य समानः । एते प्राणाद्या रुद्रपुत्राश्च । पञ्चभूतेषु धरायाः शनिः । जलस्य बुधः । तेजसोऽग्निपुत्रः पावकः । वायोर्वायुपुत्रो मरीचिः । आकाशस्य विनायकः । एवं पञ्चविंशतितत्वमानिनः ब्रह्माद्याः शन्यन्ताः कथिताः । इतः कालादीन्येकादश सूक्ष्मतत्वानि लक्ष्मीस्वरूपाणि तान्येतानि षट्त्रिंशत्तत्वानि साभिमानीनि भगवत्सृष्टानि भगवन्नियम्यानीति चिन्तयन्तः । अथच एषु



षट्त्रिंशत्तत्वेषु गतानि भगवद्रूपाणि चिन्तयन्तः । एवं भगवतो नारायणस्य प्रथमान् चतुरः वासुदेवाद्यवतारांश्च चिन्तयन्तः । कृपू सामर्थ्ये । विद्यमानस्य चिन्तनं कल्पनम् । आद्वादशं द्वादशाक्षरजगतीपर्यन्तं सर्वाणि सप्त च्छन्दांसि तन्मानिनीश्च स्वाहाद्या भगवदाश्रितत्वेन अनुसन्दधतः । एवं मनीषया भगवदेकतानया प्रज्ञया भगवत्पूजारूपं मानसं यज्ञं विमाय निर्माय अनुष्ठाय । यज देवपूजायाम् । यज्ञं भगवन्तं वा मनस्यनुसन्धाय शरीराख्यं रथं भगवत्पूजासाधनत्वेन प्रवर्तयन्ति । तदुक्तम्–'शरीरचेष्टाऽपि मम प्रणामः स्तुतिस्तु वागिन्द्रियवृत्तिरस्तु । सर्वात्मना वृत्तिरनुस्मृतिस्ते सर्वं त्वदाराधनमेव भूयात्' इति ॥ ६ ॥

**चतु॑र्द्दशा॒न्येम॑हि॒मानो॑ऽअस्य॒तन्धीरा॑वा॒चाप्रण॑यन्तिस॒प्त ।**
**आप्ना॑नन्ती॒र्त्थङ्कःऽइ॒हप्रवो॑च॒द्येन॑प॒थाप्र॒पिब॑न्तेसु॒तस्य॑ ॥ ७ ॥**

चतु॑ः+दश । अ॒न्ये । म॒हि॒मान॑ः । अ॒स्य॒ । तम् । धीरा॑ः । वा॒चा । प्र । न॒य॒न्ति॒ । स॒प्त ॥ आप्ना॑नम् । ती॒र्त्थम् । कः । इ॒ह । प्र । वो॒च॒त् । येन॑ । प॒था । प्र॒+पिब॑न्ते । सु॒तस्य॑ ॥ ७ ॥

अस्य परमात्मनः, अन्ये स्वरूपतो भिन्नाः चतुर्दश महिमानः महित्वं मापयन्तीति महिमाभिव्यञ्जकाः सन्ति । के चतुर्दश? चतुर्दश लोकाः । उक्तं हि–'बहुचित्रजगद्बहुधाकरणात् परशक्तिरनन्तगुणः परमः' इति । तं धीराः ज्ञानिनः सप्तसङ्ख्यया वाचा शिष्यप्रशिष्येषु प्रणयन्ति । उक्तं हि–'पृश्नो वपुः पितुमान् नित्य आशये द्वितीयमा सप्तशिवासु मातृषु' इति । कास्ताः सप्त वाचः? 'ऋगाद्या इतिहासश्च पुराणं पञ्चरात्रकम् । प्रोक्ताः सप्त शिवाः' । इतिहास इति रामायणं च भारतं च । अष्टादश पुराणानि । पञ्चरात्रमित्यखिलं पञ्चरात्रम् । ता इमाः सप्त वाचः । सर्वत्र जगति सर्वत्र वचसि वाच्यतया व्याप्नुवानम् । अपां देवानां नेता अजश्चतुर्मुखो वायुश्च । तयोरप्यनं चेष्टकम् । तीर्थभूतं तं सप्तभिर्वचोभिरपि को नाम प्र सामस्त्येन वोचत् अवोचत् वक्ति वा ? न कोऽपि । इह साधकजगति । यदि कश्चिद् वक्ति स नूनं कः, ब्रह्मा वायुश्च ।

अथच आप्नानं भगवत्येव व्यापकतया व्याप्नुवानं तीर्थं सप्तविद्यात्मकं शास्त्रं क इह प्र वोचत् ऋते ब्रह्मवायुभ्याम् । येन सप्तविद्यासु दर्शितेन पथा मथनेन सुतस्य सुतं भगवद्गुणाख्यममृतरसमन्येऽपि ज्ञानिनः प्रपिबन्ते ॥ ७ ॥

**सहस्रधापंञ्चदशान्युक्थायावद्द्यावांपृथिवीतावदित्तत् ।**
**सहस्रधामंहिमानंस्सहस्रंयावद्ब्रह्मविष्ठितन्तावंतीवाक् ॥ ८ ॥**

**सहस्रधा । पञ्च+दशानिं । उक्था । यावंत् । द्यावांपृथिवीइतिं । तावंत् । इत् । तत् ॥ सहस्रधा । महिमानंः । सहस्रंम् । यावंत् । ब्रह्मं । वि+स्थिंतम् । तावंती । वाक् ॥ ८ ॥**

सहस्रधा । सहस्रशब्दो बहुत्ववचनः । आब्रह्मस्तम्बपर्यन्तं सहस्रधा असङ्ख्यविधेषु शरीरेषु पञ्चदशानि तत्वानि दशेन्द्रियाणि पञ्चभूतानि चेति, अनेनैव भगवता उक्थानि शरीरोत्थापकतया उत्कृष्टतया स्थापितानि । अथवा श्रद्धा, पञ्च भूतानि, इन्द्रियगणः, मनः अन्नम्, वीर्यम्, तपः, मन्त्राः, कर्म, लोकाः, नाम चेति पञ्चदशकलारूपाणि षोळशस्य जीवस्य उत्कृष्टतया स्थापितानि ब्रह्मणा । द्यावापृथिवी इति श्रीभूमी लक्ष्मीरूपे । आह ह्यम्भ्रिणी–'अहं द्यावापृथिवी आ विवेश' इति । द्यावापृथिव्यौ यावद् व्याप्नुतः तावत् ब्रह्मापि । यतः सा देशतः कालतः समना । न तावता तस्याः सर्वसाम्यम् । यतस्तस्य सहस्रधा सहस्रमित्यनन्ताः महिमानः । तदेतद् अनन्ता वेदा वेदयितुं प्रभवन्ति यतो यावन्तं कालं ब्रह्म व्याप्य स्थितम्, वेदवागपि तावती व्याप्त्या । 'यस्य सहस्रधा महिमानः प्रत्येकं सहस्रधा भवन्ति । तदपरिमितं ब्रह्म देशतः कालतो यावत्पर्यन्तं विशेषेण स्थितं वेदवागपि तावती, तावद्देशकालव्यापिनी विष्ठिता' इति पद्मनाभतीर्थभट्टारकाः । 'ब्रह्मणः सहस्रं स्वातन्त्र्यसार्वज्ञ्यादिमहिमानः एकैकशोऽपि सहस्रधा । अत्र सहस्रशब्दोऽनन्तवाची । ईदृशमहिम्नि ब्रह्मणि किं प्रमाणमित्याशङ्कायामाह–यावदिति । यावत्कालं ब्रह्म विशेषेण स्थितं वागपि कालतस्तावती विद्यते' इति तत्वमञ्जर्याम् । अत्र प्रथमपादे 'सहस्रधा पञ्चदशानि+उक्था' इति विश्लेषेण छन्दःपूर्तिः ॥ ८ ॥



**कश्छन्दंसांयोगमावेंदधीरःक्कोधिष्ण्याम्प्रतिवाचंम्पपाद ।**
**कमृत्विजांमष्टमंशूरंमाहुर्हरीऽइन्द्रंस्यनिचिंकायकस्स्विंत् ॥ ९ ॥**

**कः । छन्दंसाम् । योगंम् । आ । वेद । धीरंः । कः । धिष्ण्यांम् । प्रतिं । वाचंम् । पपाद ॥ कम् । ऋत्विजांम् । अष्टमम् । शूरंम् । आहुः । हरीइतिं । इन्द्रंस्य । नि । चिकाय । कः । स्वित् ॥ ९ ॥**

छन्दसां सर्वपदानां भगवति योगं को धीरो वेद । यदि वेद को ब्रह्मा वायुर्वा वेद । को वा वेदवाचं धिष्ण्यो ज्ञानरूपो भगवान् । धिषणो वा । तद्विषयां यथावत् प्रतिपपाद । 'छन्दसां सर्वदेवानां योगं प्रतिपदमर्थसम्बन्धं लोके कः आवेद । न कोऽपीत्यर्थः । धिषणा बुद्धिः । तत्पूर्विकां धिष्ण्यां छन्दोलक्षणां वाचं लोकेषु कः प्रतिपपाद? अर्थेषु कः सङ्केतितवान्? न कोऽपीत्यर्थः' इति प्राचीनटीकाकाराः । धिषणया प्रज्ञया प्रज्ञापूर्वकं भगवता उत्सृष्टा धिषण्या । धिषण्यैव धिष्ण्या । तत्वमञ्जरीकारोऽर्थान्तरमाह–'छन्दसां वेदानां योगं ब्रह्माख्याभिधेयसम्बन्धं क आवेद? धिष्ण्यमाधारः । धिष्ण्यं चायमश्चेति धिष्ण्याः परमः । अन्यार्थतया प्रतीयमानामपि वाचं तं धिष्ण्यामुद्दिश्य कः प्रतिपपाद । क इति ब्रह्मा । कर्त्राक्षेपो वा' इति । 'धिष्ण्यमृक्षे स्थाने बले गृहे' इति यादवप्रकाशः । धिष्ण्यं सर्वजगदाधारः, सर्वगुणानामाश्रयः, अः दोषदूरश्चेति धिष्ण्याः । ऋतं यथार्थज्ञानरूपं ब्रह्म यजन्तीति ऋत्विजो भगवद्याजकाः । तेषां मध्ये कमृत्विजं शूरं भगवत्प्रीतिसम्पादने विक्रान्तं सप्तविद्यानां पतिमष्टम-माहुः । इन्द्रस्य परमेश्वरस्य नारायणस्य हारी भक्तनिकटं हरन्तौ वाहकौ पौरुषेयापौरुषेयवेदौ कः स्विन्निचिकाय सम्यग् जानाति । ऋक्सामनी वा शस्त्रस्तोत्रसाधनभूते हरी । 'ऋक्सामे वा इन्द्रस्य हरी' (तै.सं.६.५.९.१) इति श्रुतेः । 'धिष्णियाम्' इति विश्लेषेण छन्दःपूर्तिः ॥ ९ ॥

**भूम्याऽअन्तम्पर्य्येकेंचरन्तिरथंस्यधूर्षुयुक्तासोंऽअस्थुः ।**
**श्रमंस्यदायंविभंजन्त्येभ्योयदायमोभवंतिहर्म्येहितः ॥ १० ॥**

**भूम्याः। अन्तम्। परि। एके। चरन्ति। रथस्य। धूः+सु। युक्तासः। अस्थुः॥ श्रमस्य। दायम्। वि। भजन्ति। एभ्यः। यदा। यमः। भवति। हर्म्ये। हितः॥ १०॥**

**॥ इति धर्मसूक्तं सम्पूर्णम्॥**

भूम्याः प्रकृतेरन्तमप्राकृतं ब्रह्म एकेचन केचिदेव ब्रह्माद्याः परितश्चरन्ति जानन्ति ज्ञात्वा सेवन्ते च। भगवद्रथस्य शरीरस्य धूर्षु निर्वहणभारेषु सप्त छन्दोमानिन्यः सप्तधातुमानिन्यः अस्थुः अतिष्ठन्। तथाहि पठन्ति–'तस्योष्णिग् लोमानि त्वग् गायत्री त्रिष्टुम्मांसमनुष्टुप् स्नावान्यस्थि जगती पङ्क्तिर्मज्जा प्राणो बृहती' इति। एभ्योऽश्वेभ्यः रथवहनश्रमस्य दायं प्रतिफलं विभजन्ति मन्त्रप्रतिपाद्यान्यग्न्यादि-गतानि भगवद्रूपाणि। यदा यमः सर्वनियामको भगवान् भक्तिरम्ये हर्म्ये भक्तहृदयाख्ये ज्ञातो भवति तदा हितो भवति। तथाऽजानतां यमइव नरकादिषु दुःखदो भवति।

अत्र प्रथमचरणे–'परि+ऐके' इति, 'रथस्य धूर्षु' इति, 'विभजन्ति+एभ्यः' इति, 'हर्मिये हितः' इति च विश्लेषेण छन्दःपूर्तिरिति॥ १०॥

**इदमाचार्यगोविन्दः प्रमृष्टं शब्दतोऽर्थतः।**
**वितेने विमलं भाष्यं धर्म्मसूक्ते महार्थके॥**

**इत्याचार्यगोविन्दस्य कृतिषु धर्म्मसूक्तभाष्यं सम्पूर्णम्**

—०—

# ९. दानसूक्तम्



ॐ ॥ क्वचिद् दत्वा क्वचिद् दित्वा लोकं रक्षति यः सदा ।
दानसूक्ताभिधेयाय दानवान्ताय ते नमः ॥

आनन्दतीर्थभगवान् पुरा केरळमण्डले ।
प्रकाश्य दानसूक्तार्थं मुखरानप्यमूकयत् ॥

दर्शितानन्तवेदाध्वा दुर्मतध्वान्तभास्करः ।
मन्त्रार्थवर्णने मध्वो वाचालयतु मामपि ॥

अथातो दानसूक्तं व्याख्यास्यामः ।

'न वा उ देवाः' [१०.११७.१-९] इति नवर्चं सूक्तम् । भिक्षुराङ्गिरस ऋषिः । आद्ये जगत्यौ । शिष्टास्त्रिष्टुभः । धनान्नदानप्रेरको भगवान् देवता । तथाह्यनुक्रमणिका– 'न वा उ भिक्षुः । धनान्नदानप्रशंसा । आद्ये जगत्यौ' इति । विनियोगमाहर्ग्विधाने–

'न वा उ देवा इत्येतज्जपेत नियतव्रतः ।
'अन्नं विन्दति सर्वत्र यत्रयत्रोपतिष्ठति ॥

'पाप्मोपहतमात्मानं यो मन्येत विचक्षणः ।
'स जपेन्नियतो भूत्वा लघु मन्येत पाप्मना' इति ॥

हरिः ओा३म् ॥

**नवाउ॑दे॒वाᳵक्षुध॒मिद्व॒धन्द॑दुरु॒ताशि॑त॒मुप॑गच्छन्तिमृ॒त्यव॑ः ।**
**उ॒तोर॒यिᳶप्पृ॑ण॒तोनोप॑दस्यत्यु॒तापृ॑णन्मर्डि॒ता॒रन्नविन्दते ॥ १ ॥**



**न । वै । उँ॒इति॑ । दे॒वाः । क्षुध॑म् । इत् । व॒धम् । द॒दुः । उ॒त । आशि॑तम् ।**
**उप॑ । ग॒च्छ॒न्ति॒ । मृ॒त्यव॑ः ॥ उ॒तोइति॑ । र॒यिः । पृ॒ण॒तः । न । उप । द॒स्य॒ति॒ ।**
**उ॒त । अपृ॑णन् । म॒र्डि॒तार॑म् । न । वि॒न्द॒ते॒ ॥ १ ॥**

न वै देवा क्षुधमेव ददुः । किन्तु तद्व्याजेन वधमेव ददुः । उत आशितं भुक्तवन्तमपि मृत्यवः उप गच्छन्ति । आशितशब्दोऽयमाङ्पूर्वादाशेरुत्पन्नः अशनकर्तर्यर्थे आद्युदात्तः– आशि॑तः । कर्मण्यन्तोदात्तः–आ॒शि॒तं भिक्षुणा । तथाहि पाणिनिः–'आशितः कर्ता' (अ.सू.६.१.२०७) इति । न वा उ इत्युकारः क्षुज्जनितमाक्रोशमभिव्यनक्ति । 'उ सम्बुद्धौ रुषोक्तौ च' इति विश्व-प्रकाशः । 'उ इति पूरणः' इति वदन्ननुकम्पनीयः । अथो इतिवत् उतो इति समस्तम् । 'अपि' इत्यर्थे 'अपिच' इत्यर्थे च । नवाउ उतउ इति वाक्यमप्य-लङ्कृता कन्येव शोभते । पृणतः । पृण दाने । ददतोऽपि रयिः धनं नोप दस्यति न नश्यति । दसु उपक्षये । अपृणन्नपि अददपि मर्डितारं रक्षितारं न लभते । नह्यदानेन निगूढमन्तः पिहितं धनं रक्षति । मर्डितारं सुखयितारं इत्येके । 'मृड सुखने' इति पठन्ति । 'मृड रक्षणे' इत्यपि पठनीयम् । तद्यथा– 'पृण प्रीणने' इति पठन्ति । 'पृण दाने' इत्यपि पठनीयम् । 'उतापृणन् मर्डितारं न विन्दत इत्यददनिन्दा । अपृणन् अददत् पुमान् पालकं न विन्दते' इति भावप्रकाशिकायां पण्डिताचार्यः । अत्र 'दस्यति+उतापृणन्' इति विश्लेषेण छन्दःपूर्तिः ॥ १ ॥

**यऽआ॒ध्राय॑चकमा॒नाय॑पि॒त्वोन्न॑वा॒न्सन्र॑फि॒तायो॑पज॒ग्मुषे॑ ।**
**स्थि॒रम्मन॑ᳵकृणु॒तेसेव॑तेपु॒रोतोचि॒त्सम॑र्ड्डि॒ता॒रन्नविन्दते ॥ २ ॥**

**यः । आ॒ध्राय॑ । च॒क॒मा॒नाय॑ । पि॒त्वः । अन्न॑+वान् । सन् । र॒फि॒ताय॑ ।**
**उ॒प॒+ज॒ग्मुषे॑ ॥ स्थि॒रम् । मन॑ः । कृ॒णु॒ते । सेव॑ते । पु॒रा । उ॒तोइति॑ । चि॒त् ।**
**सः । म॒र्ड्डि॒तार॑म् । न । वि॒न्द॒ते॒ ॥ २ ॥**

आध्राय आधरणीयाय पित्वः पितूनन्नानि चकमानाय कामयमानाय । 'चक प्रीतौ' इति पठन्ति । 'चक कान्तौ' इति च पठनीयम् । रफिताय दारिद्र्य-पीडिताय । रफ हिंसायाम् । उपजग्मुषे गृहमागतायातिथये यः स्वयमन्नवान् सन्नपि स्थिरं कठोरं मनः कुरुते, न दातव्यमिति, उतो अपि च तस्यान्नदानात् पुरा पूर्वमेव स्वयमन्नं सेवते स चित् सोऽपि मर्डितारं न विन्दते । अत्र 'पितुवः+अन्नवान्' इति विश्लेषेण पूर्वार्धेऽक्षरपूर्तिः । 'पुरा+उतो चित्' इति पादयोर्विश्लेषेणोत्तरार्धे ॥ २ ॥

**सऽइद्भोजोयोगृहवेददात्यन्नकामायचरतेकृशाय ।**
**अरमस्मैभवतियामहूताऽउतापरीषुकृणुतेसखायम् ॥ ३ ॥**

**सः । इत् । भोजः । यः । गृहवे । ददाति । अन्न+कामाय । चरते । कृशाय ॥ अरम् । अस्मै । भवति । याम+हूतौ । उत । अपरीषु । कृणुते । सखायम् ॥ ३ ॥**

स एव भुङ्क्त इति भोजो भोक्ता इह चामुत्र च, यः गृहवे प्रतिग्रहयोग्याय, अन्नकामाय, अन्नार्थं चरते कृशाय दरिद्राय ददाति । 'स इद् भोजो गृहवे यो ददात्यन्नकामाय गृहवे यो ददातीति दातृप्रशंसनम् । भुङ्क्ते इति भेजः । स एव भोज इह परत्र च यो गृहवे ग्रहणयोग्याय ददाति' इति पण्डिताचार्यः । यज्ञं यान्तीति यामा देवाः । ते हूयन्तेऽत्रेति यामहूतिर्यज्ञः । तस्मिन् अस्मै दात्रे अरमलं पर्याप्तं फलं भवति । उत अपरीषु अपरासु शत्रुसेनास्वपि सखायं कुरुते । शत्रवोऽपि सख्यमिच्छन्ति । अपराशब्दस्य छन्दसि ङीप् । तद्यथा 'समाना' इति वक्तव्ये 'समानी व आकूतिः' इति । तथाहि पाणिनिः– 'केवलमामक-भागधेय-पाप-अपर-समान-आर्यकृत-सुमङ्गल-भेषजाच्च' (अ.सू.४.१.३०) इति । अत्र 'ददति+अन्नकामाय' इति विश्लेषेण छन्दःपूर्तिः ॥ ३ ॥



**नससखायोनददातिसख्येसचाभुवेसचमानायपित्वः ।**
**अपास्मात्प्रेयान्नतदोकोऽअस्तिपृणन्तमन्यमरणञ्चिदिच्छेत् ॥**
**॥ ४ ॥**

**न । सः । सखा । यः । न । ददाति । सख्ये । सचा+भुवे । सचमानाय । पित्वः ॥ अप । अस्मात् । प्र । इयात् । न । तत् । ओकः । अस्ति । पृणन्तम् । अन्यम् । अरणम् । चित् । इच्छेत् ॥ ४ ॥**

सचाभुवे सहभाविने, सचमानाय सेवमानाय, सख्ये यः पित्वः पितूनन्नानि न ददाति न स सखा । किन्तु किंसखा । अदातुस्तदोकः सदनमोक एव न भवति । यत्र नान्नदानं भवति; नापि सखायो भवन्ति । तस्मादस्मादोकसः अप प्रेयात् अपगच्छेत् । अथवा न तदोको अस्ति; क्षिप्रं नश्यति । तत अपप्रेत्य पृणन्तं दातारं कञ्चिदन्यमरणं शरणमिच्छेत् ॥ ४ ॥

**पृणीयादिन्नाधमानायतव्यान्द्राघीयांसमनुपश्येतपन्थाम् ।**
**ओहिवर्त्तन्तेरथ्येवचक्रान्यमन्यमुपतिष्ठन्तरायः ॥ ५ ॥**

**पृणीयात् । इत् । नाधमानाय । तव्यान् । द्राघीयांसम् । अनु । पश्येत । पन्थाम् ॥ ओ इति । हि । वर्त्तन्ते । रथ्या+इव । चक्रा । अन्यम्+अन्यम् । उप । तिष्ठन्त । रायः ॥ ५ ॥**

तवीयान् समृद्धः पुरुषः नाथमानाय याचमानाय पृणीयादित् दद्यादेव । तेन दीर्घतमं सुकृतस्य पन्थानमनु पश्येत् । रायः धनानि आ उ वर्तन्ते आवर्तन्त एव हि परिवर्तन्त एव हि रथ्यानीव चक्राणि । रथस्येमानि रथ्यानि । 'रथाद् यत्' (अ.सू.४.३.१२१) । अन्यमन्यमुपतिष्ठन्ते । नैकत्रावतिष्ठन्ते । अत्र 'रथियेव चक्रा+अन्यमन्यमुप' इति विश्लेषेण छन्दःपूर्तिः । अयमत्रेतिहासः– कदाचिदाचार्यमध्वः केरळमण्डले पयस्विनीतीरे 'बैलङ्गडि' (ಬೈಲಂಗಡಿ)नाम्नि ग्रामे गतं विष्णुमन्दिरमध्युवास । तत्र च वेदशास्त्रचतुराः पण्डिता

विद्यावित्तलिप्सया मिलिताः । ते तत्र मन्त्रयाञ्चक्रुः–'अयमाचार्यः तर्कतन्त्रकुशलानपि नः सर्वान् गलिताहङ्कारान् करोति । किमिह नः करणीयम्, येनेह पण्डितमण्डल्या मानो न नश्येत्' इति । ततश्चान्यप्रदेशजान् पण्डितान् पुरो निधाय मध्वसन्निधिमुपजग्मुः । उपगत्य च निवेदयामासुः–'शुश्रूषामो वयमाचार्यमुखेन दानसूक्तार्थम्' इति । सुरसरिदिव निरर्गळा प्रावर्तत प्रवचनवाणी भगवत्पादमुखात् । 'पृणीयादिन्नाथमानाय' इति मन्त्रव्याख्यानमन्तरेण विवदमाना लब्धावसराः पण्डिता उत्तस्थुः– 'पृणीयादिति को धातुः?' इति ।

आचार्य उवाच–'अस्मिन् सूक्ते सर्वत्र प्रयुक्तो दानार्थकः पृणधातुः । पृणत इत्यपृणन्निति पृणन्तमिति पृणीयादिति पृणन्निति पृणीत इति च' इति ।

तदा कश्चन वैयाकरणम्मन्य उत्तस्थौ । अयमिदानीमाचार्यः पराजित एवेति मन्यमानः स उवाद–'पृणधातुरयं पाणिनिनये सकृदेव पठ्यते तुदादिगणे । यद्यप्यधुना 'पृण प्रीणने' इति पठन्ति । प्रयोगतोऽनुगन्तव्या धात्वर्था इत्यभ्युपगमात्, दर्शनाच्च दानार्थे प्रयोगस्य, 'पृण दाने' इति च सम्मतः पाठः । तथाच पृणन् पृणन्तं पृणत इत्यादिकं शविकरणस्य पृणते रूपमिति युक्तम् । परन्तु कथं पृणीयादिति? कथं वा पृणीत इति? तेन न सर्वत्र पृणधातुना निर्वाहः सम्भवी । ततोऽनिच्छताऽपि धात्वन्तरमन्वेष्टव्यं भवति' इति ।

तदा तेऽन्योन्यस्य मुखमीक्षमाणा अस्मृतधातुपाठाः क्षणं तूष्णीकामासाश्चक्रिरे । अथ प्रतिभातधातुरिव सम्प्रत्यप्यगलितविजिगीषः स वैयाकरण आह–'मम त्वेवं प्रतिभाति–क्र्यादेः 'प्रीञ् तर्पणे' इत्यस्येदं रूपं स्यादिति । प्रीणीयात्, प्रीणीत इत्यस्येदं छान्दसं रूपम्–पृणीयात् पृणीत इति' इति ।

तस्य प्रज्ञादारिद्र्यमवधार्य परिहसन्निवाऽऽचार्य उवाच–'अहो नूनं भवताऽक्षराभ्यासः करणीयः । यत् पृप्रयोरपि भेदं न जानाति । अपिच दानमिह धात्वर्थः, न तर्पणम् । अथ यदि दानेन तृप्यन्तीति दानमपि धात्वर्थः, तत्



किमिति प्रीधातुपर्यन्तं धावनम् । पाणिनिनयानुसारेणैव एकेनैव धातुना पूर्यमाणे धातुद्वयकल्पनाऽपि व्यर्था । तथाहि श्नाविकरण एव 'पॄ पालनपूरणयोः' इति धातुः पठ्यते । उभयभाषत्वपक्षे तस्य लटि पृणीत इत्येव रूपम् । लिङि पृणीयादित्येव । शतरि च पृणन्नित्येव । किं मुधा धातुद्वयकल्पनया, एकस्य छान्दसत्वकल्पनया च? अद्भुतमिदं व्याकरणमौढ्यम्' इति ।

एवमुक्त्वाऽऽचार्यो जहास च परिजहास च । रुषेव आकुञ्चितेन साचि लोचनेन पश्यन् करकिसलयेन चोरुं प्रजहार । उग्रावतारमाचार्यं दृष्ट्वा समग्रा पण्डितसभा प्रचकम्पे ।

अथापि कश्चित् किञ्चिदिवाऽहृतधैर्यः पप्रच्छ–'भवतु तर्हि पॄधातुरेव । किमिति पृणधातुं भवन्तः प्रणिगदन्ति?'

तदा कृपया भगवत्पादस्तथ्यमाविश्चकार–'सत्यम्, पॄधातुरपि शक्यमङ्गीकर्तुम् । अथापि श्रवणत एव पृणधातुः स्फुरति । श्नाविकरणमपि पृणधातुं पुरातनाः पेठुः । एवं पृणधातुनैव शक्ये सर्वसमाहारे किमिति सहजः पन्थाः परित्यज्यते?'

तदिदमद्भुतं यत् सायणोऽप्यत्रैव प्रममाद धातुद्वयभ्रमावर्ते निमग्नः । यदाह पृणन्निति तौदादिको पृणधातुः । पृणीयादिति पॄधातुरिति । किमर्थमेवं वक्तव्यमिति स एव प्रष्टव्यः । अहो दुरन्तोऽयं दुराग्रहमहिमा ॥ ५ ॥

**मोघ॒मन्नं॑विन्दते॒ऽअप्र॑चेतास्स॒त्यम्ब्र॑वीमिव॒धऽइत्सतस्य॑ ।**
**नार्य्य॒मण॒म्पुष्य॑ति॒नोसखा॑य॒ङ्केव॑लाघोभवतिकेवला॒दी ॥ ६ ॥**

**मोघ॑म् । अन्न॑म् । वि॒न्द॒ते॒ । अप्र॑+चेताः । स॒त्यम् । ब्र॒वी॒मि॒ । व॒धः । इत् । सः । तस्य॑ ॥ न । अ॒र्य्य॒मण॑म् । पुष्य॑ति । नोइति॑ । सखा॑यम् । केव॑ल+ अघः । भ॒व॒ति॒ । के॒व॒ल॒+आ॒दी ॥ ६ ॥**

अप्रचेताः, यस्य प्रदाने न चेतः, मोघं व्यर्थमन्नं विन्दते। सत्यं ब्रवीमि, तदन्नं तस्य वध एव। एवं भुञ्जानो जीवन्नपि न जीवति। किन्तु मृत्वा नरके पच्यते। सः अर्यमणं ज्ञेयस्य सर्वस्य ज्ञातारं भगवन्तं न पुष्यति न तोषयति। नो सखायं प्राणं पुष्यति। केवलाघो भवति केवलादी। 'भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्' इति हि भगवद्वचनम्। 'प्राणापानसमायुक्तं पचाम्यन्नं चतुर्विधम्' इति च ॥ ६ ॥

**कृषन्नित्फालऽआशितङ्कृणोतियन्नध्वानमपवृङ्क्तेचरित्रैः।**
**वदन्ब्रह्मावदतोवनीयान्पृणन्नापिरपृणन्तमभिष्यात् ॥ ७ ॥**

**कृषन्। इत्। फालः। आशितम्। कृणोति। यन्। अध्वानम्। अप। वृङ्क्ते। चरित्रैः॥ वदन्। ब्रह्मा। अवदतः। वनीयान्। पृणन्। आपिः। अपृणन्तम्। अभि। स्यात्॥ ७ ॥**

कृषिं कुर्वन् फालः कर्षकः आत्मानमाशितं भोक्तारं करोति। अध्वानं यन् यात्रिकः सुचरितैः धनमप वृङ्क्ते आवर्जयति। शास्त्रार्थं वदन् ब्राह्मणः अवदतो वनीयान् भजनीयतरः। पृणन् दाता आपिर्बन्धुः अपृणन्तमभिष्यात् अदातुरभ्यधिकः स्यात्॥ ७ ॥

**एकपाद्भूयोद्विपदोविचक्रमेद्विपात्त्रिपादमभ्येतिपश्चात्।**
**चतुष्पादेतिद्विपदामभिस्वरेसम्पश्यन्पङ्क्तीरुपतिष्ठमानः ॥ ८ ॥**

**एक+पात्। भूयः। द्वि+पदः। वि। चक्रमे। द्वि+पात्। त्रि+पादम्। अभि। एति। पश्चात्॥ चतुः+पात्। एति। द्वि+पदाम्। अभि+स्वरे। सम्+पश्यन्। पङ्क्तीः। उप+तिष्ठमानः॥ ८ ॥**

एकपात्। पादशब्दोंऽशवचनः। एकांशधनः भूयः पुनरपि, अथवा भूय इति द्वितीयाबहुवचनस्य सुः, भूयसः बहुतरान् द्विपदः स्वापेक्षया द्विगुणधनवतो विचक्रमे विक्रमते। विक्रम्य तानप्यतिक्रम्य वर्धते। एवं द्विपात् कचित् पश्चात्



त्रिपादं त्रिगुणधनमप्यतीत्य अभ्येति अभिवृद्धिमेति। एवं क्वचित् चतुष्पात् चतुर्गुणधनोऽपि दैवहतकः, द्विपदामित्युपलक्षणम्, ततो हीनधनानां पङ्क्ती-रेति। पूर्वं महाधनस्तैरुपचर्यमाणः, सम्प्रति तानल्पधनानपि उपतिष्ठमानः उपचरन् सेवमानः। कुतः? अभिस्वरे तथा अभिगमने स्वस्य कार्यसिद्धिं सम्पश्यन्। श्व इभ्यो भवेत् योऽद्य भिक्षेत। श्वो भिक्षेत योऽद्य धन-वत्तमः। अतिचपला हि न जात्वेकत्र स्थिरमवतिष्ठते सम्पत्। तत् कदाऽपि नाहङ्कुर्यादाढ्योऽहमस्मीति। किन्तूदारेण भवितव्यमिति॥ ८ ॥

**समौचिद्धस्तौनसमंविविष्टस्सम्मातराचिन्नसमन्दुहाते।**
**यमयोश्चिन्नसमावीर्य्याणिज्ञातीचित्सन्तौनसमम्पृणीतः ॥ ९ ॥**

**समौ। चित्। हस्तौ। न। समम्। विविष्टः। सम्+मातरा। चित्। न। समम्। दुहातेइति॥ यमयोः। चित्। न। समा। वीर्य्याणि।। ज्ञातीइति। चित्। सन्तौ। न। समम्। पृणीतः॥ ९ ॥**

**॥ इति दानसूक्तं सम्पूर्णम् ॥**

समावपि हस्तौ न समं विविष्टः वेवेष्टः कार्यं व्याप्नुतः। विष्लृ व्याप्तौ। सम्मातराविति प्रतृण्णम्। वत्सप्रीत्या सङ्गते अपि मातरौ न समं पयो दुहाते। मातरौ न सन्दुहाते इति वा। अनियतं हि प्रतृण्णं भवति। यमयोरपि सह-जयोर्न समानि वीर्याणि। ज्ञाती समानहृदयौ बन्धू अपि सन्तौ न समं दत्तः। न कदाऽपि द्वावेकरूपाविति। तथाहि भगवत्पादवचनम्– 'भिन्नाश्च भिन्नधर्माश्च पदार्था निखिला अपि' इति। तस्माद् यस्य यदस्ति तत् तेन देयमिति॥ १२ ॥ १० ॥

**मन्यते पृणधातुं यः पॄधातुरिति दुर्भगः।**
**वैयाकरणपाशं तं क्षमतां वेदपूरुषः॥**

छान्दसत्वात् साधुरिति वदन्तो ज्ञानदुर्बलाः।
स्वमज्ञानं जुघुक्षन्ति मा भूत् तैर्दूषिता श्रुतिः॥

इदमाचार्यगोविन्दो विनेयजनवाञ्छया।
वितेने दानसूक्तार्थं प्रीत्यै माधवमध्वयोः॥

**इत्याचार्यगोविन्दस्य कृतिषु दानसूक्तभाष्यं सम्पूर्णम्॥**

—०—

# १०.पक्षिसूक्तम्



**ॐ ॥ जरितॄन् जरितार्यादीन् पक्षिणो देवपक्षिणः ।**

**य उज्जहार तं देवमग्निनारायणं स्तुमः ॥**

‘अयमग्ने–’ इत्यादिभिरष्टभिर्मन्त्रैश्चत्वारः पतत्रिणो भगवन्तं तुष्टुवुः । अयमत्र पतत्रिणामितिहासः–अस्ति पुरा मन्दपालो नामर्षिः । स तपसः पारं गत्वा कदाचिद् देहमुत्ससर्ज । तस्य तदा पुण्यलोका आवृता आसन् । स देवान् पप्रच्छ–‘किमिमे आवृता मे लोकाः’? इति । तस्मै होचुर्देवाः–‘प्रथमं प्रजायस्व । तत इमान् लोकान् भोक्ष्यसे’ इति । स चिन्तयामास–‘क्व नु मे शीघ्रमपत्यं स्यात्’ इति । सोऽध्यगच्छत्–बहुप्रसवाः खगा इति । स शार्ङ्गको नाम पक्षी भूत्वा जरितां नाम शार्ङ्गिकामुपेयिवान् । तस्यां चतुरः पुत्रान् जनयामास ब्रह्मवादिनः । त इमे चतुष्पक्षिणः– जरितारिः सारिसृक्कः स्तम्बमित्रो द्रोण इति । ‘जरितारौ कुलं ह्येतज्ज्येष्ठत्वेन प्रतिष्ठितम् । सारिसृक्कः प्रजायेत पितॄणां कुलवर्धनः । स्तम्बमित्रस्तपः कुर्याद् द्रोणो ब्रह्मविदां वरः’ [आदि.प.२५६.९–१०] इत्युक्त्वा पिताऽन्यत्र प्रययौ । ते मात्रा सह खाण्डव एवैकस्मिन् वृक्ष ऊषुः । अथ केशवार्जुनाभ्यां कृतरक्ष आशुशुक्षणिः खाण्डवं ददाह । अत आत्मरक्षार्थमृषित्वेन पूर्वसंस्कारोपेताश्चतुष्पक्षिणो ज्वलनं प्राणनारायाणौ च वेदमन्त्रैः स्तुत्वा दाहान्मुक्ता बभूवुरिति ॥ ✻ ॥

एभिर्दृष्टा अष्टावृच ऋक्संहितायां [१०.१४२.१–८] पठ्यन्ते । द्वयोर्द्वयोः क्रमेण जरितारिः सारिसृक्कः स्तम्बमित्रो द्रोणश्चर्षयः । जरिता, द्रोणः,



सारिसृक्तः, स्तम्बमित्रश्चर्षय इति वैदिकानां सम्प्रदायो भारतविरोधाच्चिन्त्यः । प्राणनारायणावग्निश्च देवताः । आद्ये द्वे जगत्यौ । ततश्चतस्रस्त्रिष्टुभः । अन्त्ये द्वे अनुष्टुभौ । अथ मन्त्रार्थः–

**हरिः ओ३म् ॥**

**अ॒यम॑ग्नेजरि॒तात्वेऽअ॑भू॒दपि॒सह॑सस्सूनो॒न॑ह्य१॒॑न्यदस्त्याप्य॑म् ।**
**भ॒द्रं॑हि॒शर्म्म॑त्रि॒वरू॑थ॒मस्ति॑त॒ऽआ॒रेहिं॒सा॑ना॒मप॑दि॒द्युमाकृ॑धि ॥ १ ॥**

**अ॒यम् । अ॒ग्ने॒ । ज॒रि॒ता । त्वेइति॑ । अ॒भू॒त् । अपि॑ । सह॑सः । सू॒नो॒इति॑ । न॒हि । अ॒न्यत् । अस्ति॑ । आप्य॑म् ॥ भ॒द्रम् । हि । शर्म्म॑ । त्रि॒+वरू॑थम् । अस्ति॑ । ते॒ । आ॒रे । हिं॒सा॑नाम् । अप॑ । दि॒द्युम् । आ । कृ॒धि॒ ॥ १ ॥**

अत्राग्निरिति प्राणनारायणयोः प्रतीकभूतः खाण्डवं दहन्नग्निः, प्राणाग्निर्नारायणश्च स्तूयते । हे अग्ने, अयमपि कृच्छ्रं गतोऽपि पक्षिजन्मनि जातोऽप्ययं जरितारिः प्राक्तनपुण्यपरिपाकवशात् त्वे तव जरिता स्वदृष्टमन्त्राभ्यां स्तोताऽभूदित्यपिना विस्मयते । अग्नेः कारुण्यातिशयं च स्वदते । कथं जरितारिः? जरित्वा स्तुत्वा तारयत्यात्मानमिति जरितारिः । जॄ स्तुतिनिन्दयोः । जरिताजठरमियर्ति पुत्रत्वायेति वा । सहो बलम् । सहसः बलरूपस्य वायोः पुत्र वीतिहोत्र । ‘वायोरग्निः’ इति श्रुतेः । बलरूपस्य सङ्कर्षणस्य पुत्र पवमान । ज्ञानितमस्य पवमानस्य पुत्र नारायण । ‘यस्ता विजानात् स पितुः पिताऽसत्’ इति श्रुतेः । सम्प्रति त्वत्तोऽन्यत् रक्षार्थमाप्यं नह्यस्ति । आप्यमम्मयं सर्वं त्वत्तोऽन्यन्नास्तीति च, जनकत्वात् तव । ‘अग्नेरापः’ इति श्रुतेः । वरणाद् वरूथं स्थानम् । त्रिवरूथं भूर्भुवः सुवरिति त्रिस्थानकं भद्रं शर्म धाम तवाग्नेरस्ति हि । अग्निवाय्वादित्याख्यं शरणं प्राणस्य नारायणस्य च । अथच नारायणस्य तव त्रिषु स्थानेषु गुप्तं भद्रं कल्याणतमं सुखमयं धाम श्वेतद्वीपानन्तासनवैकुण्ठाख्यमस्ति हि । यच्च धाम हिंसकानामारे दूरे । दुरापमित्यर्थः । सम्प्रति च आरे समीपत एवास्मान् हिंसानां हिंसन्तीं दिद्युमर्चिषां प्रखरां दीप्तिमपाकुरु ॥ १ ॥

**प्रवत्तेऽअग्नेजनिमापितूयतस्साचीवविश्वाभुवनान्यृञ्जसे ।**
**प्रसप्तयऽप्प्रसंनिषन्तनोधियऽप्पुरश्चरन्तिपशुपाऽइवत्मना ॥ २ ॥**

**प्र+वत् । ते । अग्ने । जनिम । पितु+यतः । साची+इव । विश्वा । भुवना । नि । ऋञ्जसे ॥ प्र । सप्तयः । प्र । सनिषन्त । नः । धियः । पुरः । चरन्ति । पशुपाः+इव । त्मना ॥ २ ॥**

हे अग्ने, पितूयतः, पितुरित्यन्नम्, सर्वं जगत्, सम्प्रति खाण्डवाख्यमन्नम्, जिग्रसिषोस्ते जनिम प्रादुर्भवनं प्रवत् प्रकृष्टम्, प्रकृष्टगतिमत्, प्रकृष्टग्रसनवद् वा । 'उपसर्गाच्छन्दसि धात्वर्थे' [अ.सू.५.१.११] इति हि पाणिनिः । साचीव समवेतः सखेव सचिव इव, विश्वानि भुवनानि, न्यृञ्जसे नितरां प्रेरयसि । क्वचिन्निगृह्य प्रेरयसि । क्वचिन्नियम्य नियन्त्र्य वा प्रेरयसि । तदपि न बहिः । अन्तर्निविश्यैव सर्वं प्रेरयसि । अन्तर्यामीत्येतत् । यद्यपि 'भुवनानि+ऋञ्जसे' इत्यपि शक्यं पदपाठः पठितुम् । अथाप्येवमर्थविशेषलाभायैव 'नि+ऋञ्जसे' इति प्रतृण्णं पपाठ । हे प्र विप्र सर्वज्ञ । पादादित्वान्ना-नुदात्तम् । अथवा प्रेति सप्तीनां विशेषणम्–प्रकृष्टाः सुशिक्षिताः सप्तय इति । 'एकः प्रशब्दः पूरकः' इति वदन् सायणो बभ्राम । एवं वेदपदानि व्यर्थानीति वदन्तोऽप्यहो वेदव्याख्यातारो भवन्ति । नो धियः धीवृत्तयः, इमाः स्तुतयो वा, प्र सप्तयः सुशिक्षिता अश्वा गम्यं स्थानमिव, त्वां प्र सनिषन्त प्रकर्षेण पथः स्खलनं विना, सर्वोत्तमत्वेन वा, सम्भजन्ते । यथा पशुपालाः त्मना आत्मना स्वतः पशूनां पुरः, पशून् वा पुरस्कृत्य परितश्चरन्ति तथा न इमा धीवृत्तयः स्तुतयश्च वेदान् पुरस्कृत्यैव त्वयि चरन्ति । वेदमन्त्रैरेव त्वां स्तुम इत्यर्थः । पान्ति शंसाधनाश्चेति वेदा अपि पशवः । वेदज्ञाः पशुपा गोपा उच्यन्ते । 'यजमानस्य पशून् पाहि' इति हि श्रुतिः । कृच्छ्रकालप्राप्तेः पुरतः पूर्वमेव त्वयि चरन्तीति च । 'पुरतः कृच्छ्रकालस्य धीमान् जागर्ति पूरुषः । स कृच्छ्रकालं सम्प्राप्य व्यथां नैवैति कर्हिचित् । यस्तु कृच्छ्रमनुप्राप्तं विचेता नावबुध्यते । स कृच्छ्रकाले व्यथितो न श्रेयो विन्दते महत्' [आ.प.२५८.१–२] इति, 'आत्माऽसि



वायोर्ज्वलन शरीरमसि वीरुधाम् । योनिरापश्च ते शुक्रं योनिस्त्वमसि चाम्भसः । ऊर्ध्वं चाधश्च सर्पन्ति पृष्ठतः पार्श्वतस्तथा । अर्चिषस्ते महावीर्य रश्मयः सवितुर्यथा' [२५८.७–८] इति च जरितारिवचनं मयदर्शने ॥ २ ॥

**उतवाऽउपरिवृणक्षिबप्सद्बहोरग्नऽउलपस्यस्वधावः ।**
**उतखिल्याऽउर्वराणाम्भवन्तिमातेहेतिन्तविषीश्चुक्रुधाम ॥ ३ ॥**

**उत । वै । ऊँइति । परि । वृणक्षि । बप्सत् । बहोः । अग्ने । उलपस्य । स्वधा+वः ॥ उत । खिल्या । उर्वराणाम् । भवन्ति । मा । ते । हेतिम् । तविषीम् । चुक्रुधाम ॥ ३ ॥**

अथोपरितने द्वे ऋचौ द्रोणदृष्टे इति वैदिकानां सम्प्रदायः । महाभारतानुगुणतया सारिसृक्कदृष्टे इति तु सूक्तं वचः । सारिसृक्त इति वेदव्याख्यातारः । पाठ-भ्रमोऽयम् । नन्वनुक्रमणिकायामपि तथैव पठ्यते । सत्यं पठ्यते । लिपिकृतः प्रामाद्यन् । भारतेऽपि क्वचित् सारिसृक इति पाठः । कथं सारिसृक्वः? आस्योपान्त-वाचि नान्तं पदद्वयम्–'सृक्वन् सृक्वन्' इति । अदन्तं चेदं पठ्यते । सृक्वं सृक्वमिति । सारो बलमदनशक्तिरस्त्यनयोरिति सारिणी सृक्वे सृक्के वाऽस्य स्त इति सारिसृक्वः सारिसृक्को वा । अयं मन्त्रार्थः– स्वे महिम्नि स्थितिः स्वधा । बलं स्वधा । दीप्तिः स्वधा । हे स्वधावः स्वधावन् । स्वे महिम्नि प्रतिष्ठित नारायण । बलवन् प्राण । दीप्तिमन्नग्ने । स्वद्यत इति स्वधा हविर्वा । हे हविष्मन्नग्ने । त्वं बप्सत् भक्षयन् । भस भक्षणे । बभस्ति बब्धः बप्सति इति रूपम् । तेन यो बप्स्यात् स बप्सद् भवति । बहोरुलपस्य तृणजातस्यापि जीवनं परिवृणक्षि परिवर्जयसि । वृजी वर्जने । इति वै उ? प्रथितं ननु । ऊँ इति प्रश्ने । कथमुलपः? ऋ गतौ । अपः प्रत्ययः । इयर्ति प्रसरतीत्युलप इति कातन्त्राः । वल संवरणे । वलतीत्युलपः लता तृणविशेषो वेत्यन्ये । उल आवरणे दाहे चेति सौत्रो धातुः । उल्यत इत्युलप इत्येके । तथाच अज्ञानेनाऽवृतस्य त्वत्पुरस्तृणतुल्यस्य जीवजातस्य त्वमेकः संहर्तेत्यर्थः । किञ्च उर्वराणां

सर्वसस्यसमृद्धानां भूभागानां खिल्या उत अकृष्टपच्याः प्रदेशविशेषा अपि भवत एव भवन्ति। यदा निनाशयिषसि तदा दाहनीं शक्तिमभिव्यनक्षि। यदा जिजीवयिषसि तदा पाचनीं शक्तिमित्यर्थः। उरुष्वपि वरा महान्तो देवाः। तेषां खिलस्थानीयाः खिल्या उत मुनयोऽपि भवदनुग्रहादेव भूतिमन्तो बभूवुरिति च मुख्यतः प्राणनारायणौ स्तूयेते। तस्मात् तव तविषीं प्रवृद्धां हन्तीति हेतिं ज्वालां न निन्दाजरणैः क्रोधयाम। किन्तु स्तुतिजरणैः प्रीणयाम इति॥ ३॥

**यदुद्वतोनिवतोयासिबप्सत्पृथगेषिप्रगर्धिनीवसेना।**
**यदातेवातोऽअनुवातिशोचिर्वप्तेवश्मश्रुवपसिप्रभूम ॥ ४॥**

**यत्। उत्+वतः। नि+वतः। यासि। बप्सत्। पृथक्। एषि। प्रगर्धिनी+इव। सेना॥ यदा। ते। वातः। अनु+वाति। शोचिः। वप्ता+इव। श्मश्रु। वपसि। प्र। भूम॥ ४॥**

उद्वतः उन्नतान् महाद्रुमान् निवतः निनतानुलपांश्च। अथ चोच्चांश्च नीचांश्च जीवान्। प्रळये। बप्सत् भक्षयन् यत् यदा यासि। क्रमशः नाशयसीत्येतत्। उद्वतो निवत इति स्वार्थे वतिः। 'प्रवत्' इति यथा। 'उपसर्गात् ससाधने धात्वर्थे वर्तमानात् स्वार्थे वतिः प्रत्ययो भवति छन्दसि विषये। 'यदुद्वतो निवतो यासि बप्सत्' उद्गतानि निगतानि च' [अ.सू.५.१.११८] इति जयादित्यः। तदा पृथक्पृथग् एषि रूपविशेषैः कीलविशेषैर्वा। यथा प्रगर्धिनी प्रकृष्टं शत्रुविजयं काङ्क्षन्ती सेना उच्चान् नीचांश्च शत्रुपक्षीयान् यथाक्रमं अन्वेषमन्वेषमेति। यदा वायुस्ते ज्वालामनुकूलतयाऽनुसरन् वाति तदा त्वं भूम बहुलं भूभागं वृक्षजातं जीवजातं वा प्र वपसि निःशेषं नाशयसि पुनः प्ररोहाय। नीरोमकरणं हि वपनं नाम। वनस्पतयो हि लोमानीव भूमेः। कथमिव? यथा वप्ता नापितः श्मश्रु मुखलोम वपति पुनःप्ररोहायैव। एतेन संहारः सर्वोऽपि सृष्टिगर्भ इत्याह। 'धीरस्त्वमसि मेधावी प्राणकृच्छ्रमिदं च नः। प्राज्ञः शूरो बहूनां हि भवत्येको न संशयः' [आ.प.२५८.३] इति, 'माता प्रणष्टा पितरं



न विद्मः पक्षा जाता नैव नो धूमकेतो। न नस्त्राता विद्यते वै त्वदन्यस्तस्मादस्मांस्त्राहि बालांस्त्वमग्ने। यदग्ने ते शिवं रूपं ये च ते सप्त हेतयः। तेन नः परिपाहि त्वमार्तान्नः शरणैषिणः। त्वमेवैकस्तपसे जातवेदो नान्यस्तप्ता विद्यते गोषु देव। ऋषीनस्मान् बालकान् पालयस्व परेणास्मान् प्रेहि वै हव्यवाह' [९–११] इति च सारिसृक्कवचनं भारते॥ ४॥

**प्रत्यस्यश्रेणयोददृश्रऽएकन्नियानम्बहवोरथासः।**
**बाहूयदग्नेऽअनुमर्मृजानोन्यङ्ङुत्तानामन्वेषिभूमिम् ॥ ५॥**

**प्रति। अस्य। श्रेणयः। ददृश्रे। एकम्। नि+यानम्। बहवः। रथासः॥ बाहू इति। यत्। अग्ने। अनु+मर्मृजानः। न्यङ्। उत्तानाम्। अनु+एषि। भूमिम्॥ ५॥**

अथ द्वे ऋचौ स्तम्बमित्रदृष्टे। सारिसृक्तदृष्टे इति वैदिकः सम्प्रदायः। भारतानुगुण्यात् स्तम्बमित्रदृष्टे इति सूक्तं वचनम्। कथं स्तम्बमित्रः? स्तम्बः गुल्मः प्रियवासत्वान्मित्रमस्येति स्तम्बमित्रः। आब्रह्मस्तम्बपर्यन्तं भगवदधिष्ठानत्वेन प्रियमस्येति च स्तम्बमित्रः। अयं मन्त्रार्थः– अग्ने, बाहू, तृतीयार्थे प्रथमा। सप्तसु हि प्रथमामुशन्ति। बाहुभ्यामिव द्विधा विभक्ताभ्यां तव कीलाभ्यामरण्यभूमिमनुमर्मृजानः। मृजू शुद्धौ। दाहन्दाहं तत्तदनुगुणं शोधयन्। अग्निस्पर्शेन हि सर्वमशुद्धं शुद्धं भवति। नह्यग्निरन्यतः शुध्यति। न्यङ् प्रथमं नीचैश्चरन्, तत उत्तानामुपरिगतामरण्यभूमिम्, वृक्षजातमित्येतत्, अन्वेषि, अनुसरन्नूर्ध्वमुखः सन् गच्छसि। तदाऽस्य दहतस्ते हेतीनां श्रेणयः प्रत्येकं दृश्यन्ते। कथम्? एकं प्रयाणं मार्गं वा प्रस्थिता बहवो रथा यथा। हव्यवाहनः किल त्वम्? अतस्ते कीला देवानां हविर्दातुं ऊर्ध्वं देवयानं प्रति प्रस्थिता रथा इव बभुरित्यर्थः॥ ५॥

**उत्तेशुष्माजिहतामुत्तेऽअर्चिरुत्तेऽअग्नेशशमानस्यवाजाः।**
**उच्छ्वञ्चस्वनिनमवर्द्धमानऽआत्वाद्यविश्वेवसवस्सदन्तु ॥ ६॥**

**उत्। ते॒। शुष्मा॑ः। जि॒ह॒ता॒म्। उत्। ते॒। अ॒र्चिः। उत्। ते॒। अ॒ग्ने॒। श॒श॒-मा॒नस्य॑। वाजा॑ः॥ उत्। श्व॒ञ्च॒स्व॒। नि। न॒म॒। वर्द्ध॑मानः। आ। त्वा॒। अ॒द्य। विश्वे॑। वस॑वः। स॒द॒न्तु॒॥ ६॥**

अग्ने, शुष्यन्त्येभिरिति शुष्माः शोषकरास्तरस्विनो वा । शुष शोषणे । ते ज्वालाः, उत् उद्गत्य, मामपहाय जिहतां गच्छन्तु । ओहाङ् गतौ । लोटि जिहीताम्, जिहाताम्, जिहतामिति रूपम् । तवार्चिः अक्ष्णोः क्षपणी प्रभा उज्जिहीताम् । शशमानस्य वेगेन परितो धावतस्ते वाजाः कर्णभेदिनश्चटत्काराः उज्जिहतां दूरं गच्छन्तु । 'वाजो निस्वनपक्षयोः' । बलानि वा वाजाः । वेगा वा । बलस्य वेगस्य चोद्गमनं नाम स्वस्मिंस्तत्प्रभावविरहः । तव बलं मयि मा प्रयोक्षीः, मा च मदभिमुखं धावीरिति । उत् श्वञ्चस्व ऊर्ध्वं गच्छ महतो वनस्पतीन् दग्धुम् । श्वचि गतौ । नि नम नीचैः प्रह्वः प्रसर, उलपान् दग्धुम् । एवमन्यत्र वर्धमानो भव । नास्मासु वर्धस्व । अद्य अस्मद्रक्षार्थं विश्वे वसवः रश्मयः त्वामा सदन्तु त्वय्येवोपसंहृता भवन्तु । विश्वे च वसवो देवाः त्वामासदन्तु त्वय्यासन्ना भवन्तु, अस्मान् रिरक्षिषव इति । 'ज्येष्ठस्तातो भवति वै ज्येष्ठो मुञ्चति कृच्छ्रतः । ज्येष्ठश्चेन्न प्रजानाति कनीयान् किं करिष्यति' [आ.प.२५८.४] इति, 'सर्वमग्ने त्वमेवैकस्त्वयि सर्वमिदं जगत् । त्वं धारयसि भूतानि भुवनं त्वं बिभर्षि च । त्वमग्निर्हव्यवाहस्त्वं त्वमेव परमं हविः । मनीषिणस्त्वां जानन्ति बहुधा चैकधाऽपि च । सृष्ट्वा लोकांस्त्रीनिमान् हव्यवाह काले प्राप्ते पचसि पुनः समिद्धः । त्वं सर्वस्य भुवनस्य प्रसूतिस्त्वमेवाग्ने भवसि पुनः प्रतिष्ठा' [१२–४] इति च स्तम्बमित्रवचनं भारते ॥ ६ ॥

**अ॒पामि॒दंन्यय॑नंसमु॒द्रस्य॑नि॒वेश॑नम् ।**
**अ॒न्यङ्कृ॑णुष्वे॒तःप्पन्था॒न्तेन॑याहि॒वशाँ॒अनु॑ ॥ ७ ॥**

**अ॒पाम्। इ॒दम्। निऽअय॑नम्। स॒मु॒द्रस्य॑। नि॒+वेश॑नम्॥**
**अ॒न्यम्। कृ॒णु॒ष्व॒। इ॒तः। पन्था॑म्। तेन॑। या॒हि॒। वशा॑न्। अनु॑॥ ७॥**



अन्त्ये द्वे ऋचौ द्रोणदृष्टे । स्तम्बमित्रदृष्टे इति वैदिकः सम्प्रदायः । भारतानुगुण्याद् द्रोणदृष्टे इति सूक्तं वचः । कथं द्रोणः? भगवन्तं प्रति द्रवतीति । द्रु गतौ । नः प्रत्यय इति कातन्त्राः पाणिनीयाश्च । अयं मन्त्रार्थः– इदमस्मन्निवेशनम्, अस्मच्छरीरं वा, आ पालनादपां समस्तदेवानां निलयनम् । समुद्रिक्तस्य भगवतो निवेशनम् । अतोऽन्यमितः पन्थानं कुरु । तेन पथा याहि यथावशं यथेच्छम् ॥ ७ ॥

**आय॑नेतेप॒राय॑णे॒दूर्वा॑रोहन्तुपु॒ष्पिणी॑ः ।**
**ह्र॒दाश्च॑पु॒ण्डरीकाणिसमु॒द्रस्य॑गृ॒हाऽइ॒मे ॥ ८ ॥**

**आ॒+अय॑ने। ते॒। प॒रा॒+अय॑ने। दूर्वा॑ः। रो॒ह॒न्तु॒। पु॒ष्पिणी॑ः॥**
**ह्र॒दाः। च॒। पु॒ण्डरीकाणि। स॒मु॒द्रस्य॑। गृ॒हाः। इ॒मे॥ ८॥**

**॥ इति पक्षिसूक्तं सम्पूर्णम् ॥**

ते आयने यत्र त्वमागच्छसि तत्र, परायणे यतः परागच्छसि तत्र च, दूर्वा रोहन्तु । बहुवचनमाद्यर्थे । प्रकारश्चाद्यर्थः । दूर्वाप्रकारा भगवत्पूजासाधनानि तृणविशेषाश्छिन्नाश्छिन्नाः पुना रोहन्तु । एतादृशगुणविशेषादेव दूर्वाणां मुखतो ग्रहणम् । पुष्पिण्यो लताश्च रोहन्तु । पुष्पवत्यो दूर्वा इति व्याख्यानं तु न श्लिष्यति । नहि दूर्वाः पुष्पवत्यो भवन्ति । तत्रतत्र यथेच्छं ह्रदाश्च भवन्तु । ह्रदेषु च पुण्डरीकाणि भवन्तु । इमे भूभागाः समुद्रिक्तस्य भगवतः सस्य-श्यामलाः कुसुमशबला गृहा भवन्तु । इमेऽस्माकं देहा वा । अत्र सूक्तसमाप्तिरष्टमाष्टकस्य सप्तमाध्यायसमाप्तिश्च । 'हिरण्यरेतास्त्वरितो ज्वलन्नायाति नः क्षयम् । सप्तजिह्वाननः क्रूरो लेलिहानो विसर्पति' [आ.प.२५८.५] इति, 'त्वमन्नं प्राणिभिर्भुक्तमन्तर्भूतो जगत्पते । नित्यप्रवृद्धः पचसि त्वयि सर्वं प्रतिष्ठितम् । सूर्यो भूत्वा रश्मिभिर्जातवेदो भूमेरम्भो भूमि-जातान् रसांश्च । विश्वानादाय पुनरुत्सृज्य काले दृष्ट्वा वृष्ट्या भावयसीहि शुक्र । त्वत्त एताः पुनः शुक्र वीरुधो हरितच्छदाः । जायन्ते पुष्करिण्यश्च सुभद्रश्च

महोदधिः। इदं वै सद्म तिग्मांशो वरुणस्य परायणम्। शिवस्त्राता भवास्माकं माऽस्मानद्य विनाशय। पिङ्गाक्ष लोहितग्रीव कृष्णवर्त्मन् हुताशन। परेण प्रेहि मुञ्चास्मान् सागरस्य गृहानिव' (१५–९) इति च द्रोणवचनं भारते॥ ८॥

**इदमाचार्यगोविन्दः कृपया कृष्णमध्वयोः।**
**दुर्गमार्थं पक्षिसूक्तं व्याचकार यथामति॥**

**इत्याचार्यगोविन्दस्य कृतिषु पक्षिसूक्तभाष्यं समाप्तम्॥**

—०—

# ११. गर्भसूक्तम्



ॐ ॥ **अदभ्रगुणसम्पन्नं गर्भेष्वर्भकपोषकम्।**
**नत्वा नारायणं गर्भसूक्तभाष्यं वितन्यते॥**

अथातो गर्भसूक्तं व्याख्यास्यामः।

दशममण्डले १८४तमं तृचं गर्भसूक्तमानुष्टुभम्। तथा ह्यनुक्रमणिका– 'विष्णुस्त्वष्टा गर्भकर्ता विष्णुर्वा प्राजापत्यः, गर्भार्थाऽऽशीः, लिङ्गोक्त-दैवतम्, आनुष्टुभम्' इति। व्याचख्यौ च षड्गुरुशिष्यः–'गर्भाणां कर्तृभूतस्त्वष्टा नामर्षिः। अथवा प्रजापतिपुत्रो विष्णुर्नामर्षिः। गर्भाशीरत्र प्रार्थ्यते। विष्णुस्त्वष्टा प्रजापतिः (धाता) सिनीवाली सरस्वती अश्विनाविति लिङ्गोक्तदैवतमिदम्' इति। वस्तुतस्तु 'ब्रह्मा ऋषिः। अनुष्टुप् छन्दः। लक्ष्मीनारायणौ देवते। अन्याश्च यथासम्भवं मन्त्रोक्ताः' इति युक्तम्।

अत्र बृहद्देवताकार आह–'यद्विष्णुरिति सूक्तं तु वैश्वदेवं प्रचक्षते। तस्मिन् स्वदारगर्भार्थमृषिराशास्त आशिषः' इति। विनियोगं चाऽह ऋग्विधाने– 'पुष्पं दृष्ट्वा तु या गर्भं न गृह्णीयाद् वयोऽन्विता। 'विष्णुर्योनिं', 'नेजमेष' योनिं स्पृष्ट्वा ततो जपेत्' इति। 'नेजमेष' इति खिलेषु पठितास्त्रयो मन्त्रा उपरिष्टाद् विव्रियन्ते।

**हरिः ओ३म्॥ विष्णुर्योनिंकल्पयतुत्वष्टारूपाणिपिंशतु।**
**आसिंचतुप्रजापतिर्धातागर्भन्दधातुते ॥ १ ॥**

**विष्णुः। योनिम्। कल्पयतु। त्वष्टा। रूपाणि। पिंशतु॥**
**आ। सिञ्चतु। प्रजा+पतिः। धाता। गर्भम्। दधातु। ते॥ १ ॥**



चतुर्मूर्तिर्नारायणः स्तूयते विष्णुस्त्वष्टा प्रजापतिर्धाता। विष्णुर्जीवेन सह विशन् वासुदेवः इमं स्त्रीगर्भमुत्पत्तिस्थानं कल्पयतु। त्वक्षतीति त्वष्टा सङ्कर्षणो रूपाणि पिंशतु अवयवविभागं कल्पयतु। त्वक्ष तनूकरणे। पिश अवयवे। प्रजा पतत्यनेन स्त्रीगर्भ इति सृष्टिहेतुः प्रद्युम्नो जीवमासिञ्चतु स्त्रीगर्भे। धाता स्थिति-हेतुत्वादनिरुद्धस्ते गर्भं गर्भगं शिशुं पोषयतु। मोक्षद एवात्र बन्धकृद् बभूव। नाशकृदेवात्र रूपकृत् बभूवेत्यहो महामहिमा भगवतो लीलाविलासः॥ १॥

**गर्भन्धेहिसिनीवालिगर्भन्धेहिसरस्वति।**
**गर्भन्तेऽअश्विनौदेवावाधत्ताम्पुष्करस्रजा ॥ २ ॥**

**गर्भम्। धेहि। सिनीवालि। गर्भम्। धेहि। सरस्वति।**
**गर्भम्। ते। अश्विनौ। देवौ। आ। धत्ताम्। पुष्कर+स्रजा॥ २ ॥**

श्रीभूदुर्गासरस्वतीभारतीपार्वत्यः, अमादेवता सिनीवाली च देवताः। रामकृष्णौ प्राणनारायणावश्विनौ च।

सारत्वात् सः नारायणः। तद्वती सिनी भगवदनुग्रहपात्रं स्त्री। तां वलते संवृणुत इति सिनीवाली। गर्भाधानभाजने स्त्रीजने सन्निहिते हे श्रीः, गर्भं धारय। दुर्गारूपा लक्ष्मीश्च सिनीवाली। पार्वती च। 'गौर्यामपि सिनीवाली' इति यादवप्रकाशः। दृष्टेन्दुकलाया अमाया देवता च सिनीवाली। याऽङ्गिरस्तनया बृहस्पतिभगिनी। हे सरस्वति, सरस्वतीति भूरूपा लक्ष्मीरुच्यते। सरस्वतीभारत्यौ च। लक्ष्मीः लक्षणोपेतं सम्पन्नं च गर्भं दधातु। दुर्गा दुर्गाणि संसृतिदुरितानि तारयतु। सरस्वती विद्यावन्तं गर्भं दधातु। भारती च। पार्वती संसारसुखं ददातु। अमावत् तमोमय्यामस्यां संसृताविन्दुकलावदीषत्प्रकाशिनी चेयं सन्ततिर्भूयादिति सिनीवाली च प्रार्थ्यते। अश्विनौ देवौ नीरोगं गर्भं कुरुताम्। रामकृष्णौ चाश्विनौ। प्राणनारायणौ च। 'रामकृष्णौ तथाऽश्विनौ' इत्यृग्भाष्ये। 'विष्णुर्वायुश्च तं रथम्। प्रकृष्टानन्दरूपत्वात् प्राणाख्यावधितिष्ठतः। तावेव

चाश्विनामानौ हयास्यौ जगदीश्वरौ' इत्यैतरेयभाष्ये। पुष्टिकरस्रजौ। पुष्टिकरं सन्तानं सृजत इति॥ २॥

**हिरण्मयीऽअरणीयन्निर्म्मन्थतोऽअश्विना।**
**तन्तेगर्भंहवामहेदशमेमासिसूतवे ॥ ३ ॥**

**हिरण्मयीइति। अरणीइति। यम्। निः+मन्थतः। अश्विना॥**
**तम्। ते। गर्भम्। हवामहे। दशमे। मासि। सूतवे॥ ३॥**

**॥ इति सांहितं गर्भसूक्तं सम्पूर्णम्॥**

सुखमय्यौ अरणी दम्पती। तत्र स्वर्वैद्यावश्विनौ रामकृष्णौ प्राणनारायणौ वा यं गर्भं मथनेन निष्पादयतः। तं गर्भं त्वयि जुहोमि। दशमे मासि पुम्प्रसवार्थम्॥ ३॥

एतत्सङ्गतमानुष्टुभं तृचं खिलेषु पठ्यते विष्णुदेवत्यम्। नेजमेषस्याऽर्षमिति खिलानुक्रमणी–'नेजमेष तृचं प्राजापत्यो नेजमेषः' इति। प्राजापत्यो विष्णुः पूर्वसूक्तस्यर्षिरित्युक्तम्। अस्य पुनस्तृचस्य तद्भ्राता नेजमेष ऋषिरित्युक्तं भवति। सन्दिग्धप्रामाण्यान्यनुक्रमणीवचनानि भवन्ति। ब्रह्मा ऋषिः, विष्णुर्देवतेति निर्विवादम्। अनुष्टुबेव च च्छन्दः। तथाहि ऋक्–

**नेजमेषपरापतसुपुत्रऽपुनरापत।**
**अस्यैमेपुत्रकामायैगर्भमाधेहियऽप्पुमान् ॥ १ ॥**

**नेजमेष। परा। पत। सु+पुत्रः। पुनः। आ। पत॥**
**अस्यै। मे। पुत्र+कामायै। गर्भम्। आ। धेहि। यः। पुमान्॥ १॥**

नेजं शुद्धिं मेषति परिषिश्चतीति नेजमेषः। णिजिर् शौचपोषणयोः। मिषु सेचने। नेजौ लोकपावनौ लोकपालनौ च मा ज्ञानं च इषः इच्छा च यस्य वा। हे नेजमेष नारायण, गर्भं शोधयितुं परापत। शोभनपुत्रदः सन् पुनरापत। पुत्रकामायै अस्यै मज्जायायै यः पुमान् भवति तं पुङ्गर्भमाधेहि॥ १॥



**यथेयम्पृथिवीमह्युत्तानागर्भमादधे।**
**एवन्तङ्गर्भमाधेहिदशमेमासिसूतवे ॥ २ ॥**

**यथा। इयम्। पृथिवी। मही। उत्+ताना। गर्भम्। आ। दधे॥**
**एवम्। तम्। गर्भम्। आ। धेहि। दशमे। मासि। सूतवे॥ २॥**

यथा महिता पृथिवी दिवं प्रत्युत्ताना उन्मुखा वर्षणेन सस्यादिगर्भमाधत्ते एवमस्यामप्युत्तानायां तं पुमांसं गर्भमाधेहि दशमे मासि पुम्प्रसवार्थम्। मही+उत्ताना' इति विश्लेषेणाष्टाक्षरता॥ २॥

**विष्णोश्श्रेष्ठेनरूपेणास्यान्नार्याङ्गवीन्याम्।**
**पुमांसम्पुत्रमाधेहिदशमेमासिसूतवे ॥ ३ ॥**

**विष्णोः। श्रेष्ठेन। रूपेण। अस्याम्। नार्याम्। गवीन्याम्॥**
**पुमांसम्। पुत्रम्। आ। धेहि। दशमे। मासि। सूतवे॥ ३॥**

**॥ इति खिलगतं गर्भसूक्तं सम्पूर्णम्॥**

विष्णोः श्रेष्ठेन रूपेण उत्तमाधिष्ठानभूतेन मया। अः विष्णुः पतिरस्या इतीनी लक्ष्मीः। गवि भुवि स्थितायामस्यामिन्यां लक्ष्मीप्रतीकरूपायां नार्यां पुमांसं पुत्रमाधेहि। 'पुत्रानाधेहि' इति केचित् पठन्ति। तदा 'सम्प्रति पुमांसं पुत्रमाधेहि। एवमुत्तरत्रापि पुतस्तारकान् बहूनाधेहि' इत्यर्थः। अत्र 'रूपेण+अस्यां नार्यां गवीनियाम्' इति छन्दःपूर्तिः॥ ३॥

**वासुदेवः स्वयं विष्णुस्त्वष्टा सङ्कर्षणः स्मृतः।**
**प्रजापतिस्तु प्रद्युम्नो धाता पाताऽनिरुद्धकः॥**

**चतुर्मूर्तिः स भगवान् चतुर्वर्गफलप्रदः।**
**चतुर्बाहुश्चतुर्व्यूहश्चतुर्धा पातु नः सदा॥**

इदमाचार्यगोविन्दः प्रमृष्टं शब्दतोऽर्थतः।
वितेने गर्भसूक्तस्य भाष्यमीशप्रसत्तये॥

**इत्याचार्यगोविन्दस्य कृतिषु गर्भसूक्तभाष्यं सम्पूर्णम्॥**

—०—

# १२. संवननसूक्तम्



ॐ ॥ विबुधैः कृतसंवननं वननीयं प्रणम्य हरिगुरुचरणम् ।
याचे प्राचां वाचां मननेषु समानमस्तु मे स्वान्तम् ॥ ✲ ॥

अथातः संवननसूक्तं व्याख्यास्यामः । दशममण्डले ऋक्संहितान्ते वेद-सन्देशसारत्वेन पठ्यमानं चतुर्मन्त्रमयं सूक्तम् (१०.१९१.१-४)॥

अथर्ववेदे चैते मन्त्राः पठ्यन्ते पाठभेदेन सूक्तभेदेन च ।

'संसं चतुष्कं संवननः सञ्ज्ञानमाद्याऽऽग्नेयी तृतीया त्रिष्टुप्' इत्यनुक्रमणिका । संसमिति चतुरृचं सूक्तम् । संवनन ऋषिः । तृतीया त्रिष्टुप् । आद्यद्वितीयचतुर्थ्य अनुष्टुभः । अग्निनारायणो देवता आद्यायाः । सञ्ज्ञानप्रार्थनमवशिष्टासु ।

विनियोगमाहर्ग्विधाने–

'संत्समिद्युवसे वृषन् सौभ्रात्रकरणं महत् ।
'ज्ञातिभेदे प्रयुञ्जीत न भिद्यन्ते कदाचन' इति ।

**हरिः ओ३म् ॥ संसमिद्युवसेवृषन्नग्नेविश्वान्यर्य्यऽआ ।**
**इळस्पदेसमिद्ध्यसेसनोवसून्याभर ॥ १ ॥**

**सम्ऽसम् । इत् । युवसे । वृषन् । अग्ने । विश्वानि । अर्य्यः । आ ॥**
**इळः । पदे । सम् । इद्ध्यसे । सः । नः । वसूनि । आ । भर ॥ ११ ॥**

अर्य स्वामिन् भक्तिज्ञेय । अर्य इति स्वामिवचनः । वैश्यवचनश्च । 'अर्यः स्वामिवैश्ययोः' (अ.सू.३.१.१०३) । तत्र आद्युदात्तो वैश्यवचनः– अर्यः । अन्तोदात्तः स्वामिवचनः–अर्यः । 'स्वामिन्यन्तोदात्तत्वं च वक्तव्यम्' इति हि वार्तिकम् । अग्ने अगनेतर्नारायण, वृषन् अभिलषितवर्षक, विश्वानि भूतजातानि जीवजातानि वा, संसम् तत्तद्योग्यतानुगुणमतिसमीचीनतया आ युवसे आयोज-यसि । यु मिश्रणे । त्रिवृत्करणेन विश्वम्, कर्मतत्फलयोजनेन जीवं च । एवं



तरतमभावसूचकतया सार्थकं द्विर्वचनं वृथा पादपूरणं वदति पाणिनिः–'प्रसमुपोदः पादपूरणे' (अ.सू.८.१.६) इति । इळस्पदे इळायाः पदे भूस्थानेऽग्नि-प्रतीकतयोत्तरवेद्यामाराध्यः समिध्यसे । 'एतद्वा इळायास्पदं यदुत्तरवेदीनाभिः' इत्यैतरेयब्राह्मणम् । इडः अन्नस्य पदे स्थाने उदरे च वैश्वानरः समिध्यसे । 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः' इति स्मरणात् । 'उदरं ब्रह्मेति शार्कराक्ष्या उपासते' इति च श्रुतिः । स नो वसूनि ज्ञानादीन्याभर आहर । 'विश्वानि+अर्य आ' इति, 'वसूनि+आभर' इति विश्लेषेण छन्दःपूर्तिः ॥ १ ॥

**सङ्गच्छध्वंसंवदध्वंसंवोमनांसिजानताम् ।**
**देवाभागंयथापूर्वेसञ्जानानाऽउपासते ॥ २ ॥**

**सम् । गच्छध्वम् । सम् । वदध्वम् । सम् । वः । मनांसि । जानताम् ॥**
**देवाः । भागम् । यथा । पूर्वे । सम्+जानानाः । उप+आसते ॥ २ ॥**

हे साधकाः, भक्तिमार्गे सम्भूय गच्छत । 'समो गमि–' (अ.सू.१.३.२९) इति सम्पूर्वस्य गमेरात्मनेभाषा सङ्गच्छध्वमिति । संवदध्वम्, सम्भूयैकमत्येन वदत । 'व्यक्तवाचां समुच्चारणे' (अ.सू.१.३.४८) इत्यात्मनेभाषा । व्यक्तवाचां मनुष्याणां समुच्चारणे सहोच्चारण इति सूत्रार्थः । वो मनांसि सञ्जानताम्, सम्भूयैव मनांस्येकरूपमर्थमवगच्छन्तु । 'सम्प्रतिभ्यामनाध्याने' (अ.सू.१.३.४६) इति सम्पूर्वस्य जानातेरनाध्यानेऽर्थे आत्मनेभाषा । अनाध्यानमनुत्कण्ठा । यथा पूर्वे देवाः स्वंस्वं हविर्भागं ऐकमत्येन सम्भूय जानन्त उपासते उपगच्छन्ति तथेति ॥ २ ॥

**समानोमन्त्रस्समितिस्समानीसमानंमनस्सहचित्तमेषाम् ।**
**समानम्मन्त्रमभिमन्त्रयेवस्समानेनवोहविषाजुहोमि ॥ ३ ॥**

**समानः । मन्त्रः । सम्ऽइतिः । समानी । समानम् । मनः । सह । चित्तम् । एषाम् ॥ समानम् । मन्त्रम् । अभि । मन्त्रये । वः । समानेन । वः । हविषा । जुहोमि ॥ ३ ॥**

एषां अस्माकम्, वेदमार्गमनुसरताम्। मन्त्रः मन्त्रणं स्तुतिवचनं वा समान एकाभिप्रायो भूयात्। समितिः सभा चैकाभिप्राया। समीचीना इतिः प्राप्तिर्वा। फलाधिगमः। मननं समानमस्तु। चित्तं विज्ञानं च सह एकार्थमस्तु। वः समानं मन्त्रमभिमन्त्रय इति सहसाधकान् प्रति संवनन ऋषिराह। समानेन समानोद्देशेन हविषा जुहोमि। हविषा आह्वानरूपेण नाम्ना वा जुहोम्याह्वयामि भगवन्तम्॥ ३॥

**स॒मा॒नीव॒ऽआकू॑तिस्समा॒नाहृद॑यानिवः।**
**स॒मा॒नम॑स्तुवो॒मनो॒यथा॑व॒स्सुस॒हास॑ति ॥ ४॥**

**स॒मा॒नी। व॒ः। आ+कू॑तिः। स॒मा॒ना। हृद॑यानि। व॒ः॥**
**स॒मा॒नम्। अ॒स्तु। व॒ः। मन॑ः। यथा॑। व॒ः। सु+स॑ह। अस॑ति॥ ४॥**

**॥ इति संवननसूक्तं सम्पूर्णम्॥**

तदेव सतात्पर्यमाह। अग्निनारायणस्य प्रसादात् व आकूतिराशयः समानी भगवताऽर्थभूतेनैकार्थाऽस्तु। हृदयानि च भगवद्भक्तिद्रुतानि एकभावानि भवन्तु। वो मनश्च भगवन्तमेवैकान्ततश्चिन्तयत् समानमस्तु। यथा च वः सुसह सुसाङ्गत्यं भगवदेकतानत्वमसति भवति तथा सर्वं समानमस्त्विति। मानेन सहितं समानम्। सम् परमात्मानं स्वसमीपमानयतीति समानमिति च विशिष्टोऽर्थः। 'अकयप्रविसम्भूमसखहा विष्णुवाचका एकाक्षराः' इति च पुरातनम्॥ ४॥

**इदमाचार्यगोविन्दः प्रमृष्टं शब्दतोऽर्थतः।**
**वितेने विमलं भाष्यं सूक्ते संवननोदिते॥**

**इत्याचार्यगोविन्दस्य कृतिषु संवननसूक्तभाष्यं सम्पूर्णम्॥**

—०—

# १३. कुन्तापसूक्तम्



ॐ॥ कुन्तापसूक्तसंवेद्यं सन्तापहरणं सताम् ।
हन्तापरिमितानन्दं पश्चात्मानं हरिं स्तुमः ॥
छन्दसां च्युतसाराणां सारवतां पुनर्ददौ ।
छन्दस्सु यः सन्निहितस्तं स्वच्छन्दं हरिं स्तुमः ॥
कुन्तापसूक्तमन्त्रार्थः पप्रथे यदुपक्रमम् ।
सर्वबेदप्रवक्तारं पूर्णबोधं तमाश्रये ॥

अथातः कुन्तापसूक्तं व्याख्यास्यामः ।

गायत्र्यास्त्रिष्टुभो जगत्या अनुष्टुभश्च च्छन्दोभ्यश्च्युतानां रसानां पुनः प्रत्याधानाय पृष्ठ्यषळहस्य षष्ठेऽह्नि शंसनीयतया प्रजापतिना विहितः मन्त्रग्रामः कुन्तापसूक्तमित्युच्यते । तथाहि श्रूयत ऐतरेयब्राह्मणे–'छन्दसां वै षष्ठेनाह्नाऽऽप्तानां रसोऽत्यनेदत् । स प्रजापतिरबिभेत् । पराङ्ङयं छन्दसां रसो लोकानत्येष्यतीति । तं पुरस्ताच्छन्दोभिः पर्यगृह्णात् । नाराशंस्या गायत्र्याः । रैभ्या त्रिष्टुभः । परिक्षित्या जगत्याः । कारव्याऽनुष्टुभः । तत् पुनश्छन्दस्सु रसमादधात् । सरसैर्हास्य च्छन्दोभिरिष्टं भवति । सरसैश्छन्दोभिर्यज्ञं तनुते य एवं वेद' (ऐ.ब्रा.३०.६) इति ।

अयमर्थः– पृष्ठ्यषळहनामके क्रतुभेदे ब्राह्मणाच्छंसिना शंसनीयेषु शस्त्रमन्त्रेषु त्रिंशदृचं कुन्तापाख्यं खिलसूक्तं तृतीयम् । कुन्तापपठने हेतुरत्रोच्यते । पृष्ठ्यषळहस्य षष्ठेऽह्नि प्राप्तानां गायत्र्यादीनां छन्दसां रसः सारः अतिशयेन अनेदत् गलितोऽभूत् । तदा स भयरहितोऽपि प्रजापतिरबिभेदिव । किमिति? अयं छन्दसां सारः पराङ् विमुखो भूत्वा लोकानतिक्रम्य गमिष्यतीति । ततस्तं छन्दःसारं छन्दोभिर्गायत्र्यादिभिः पर्यगृह्णात् परिसञ्जग्राह । कथम्?



नाराशंस्या गायत्र्याः सारं पर्यगृह्णात् । कुन्तापसूक्तगताभिः 'नराशंस स्तविष्यते' इति नराशंसपदघटिततया नाराशंसीभिः 'इदं जनाः' इत्यादिभिस्तिसृभिर्ऋग्भिः । 'वच्यस्व रेभ' इत्यादिभिस्तिसृभी रेभपदघटिततया रैभीभिस्त्रिष्टुभः सारं पर्यगृह्णात् । 'राष्ट्रे राज्ञः परिक्षितः' इति परिक्षित्पदघटिततया पारिक्षितीभिः 'राज्ञो विश्वजनीनस्य' इत्यादिभिश्चतसृभिर्जगत्याः सारं पर्यगृह्णात् । कारुपदघटिततया कारवीभिः 'इन्द्रः कारुम्' इत्यादिभिश्चतसृभिरनुष्टुभः सारं पर्यगृह्णात् । तत् तस्मात् नाराशंसीरैभीपारिक्षितीकारव्याख्यानां चतुर्दशसङ्ख्याकानामृचां शंसनात् छन्दस्सु पुनः सारमदधात् । य एवं वेद तेन सरसैश्छन्दोभिरिष्टं भवति । सरसैश्छन्दोभिर्यज्ञं च विस्तारयति स इति ॥

तदिदं त्रिंशदृचं कुन्तापसूक्तमृग्वेदखिलेषु पठ्यते । अथर्वसंहिताखिलेषु च सूक्तद्वयात्मना (२०.११७–८) । तत्राऽद्याश्चतुर्दश मन्त्राः प्रथमं सूक्तम् । त एव चात्र समुल्लिखिताः ।

कथं कुन्तापसूक्तं? कुं कुत्सितं दोषं दुष्टं वा तापयन्तीति कुन्तापा मन्त्राः, तेषामिदं सूक्तं भवति । कुन्तापं वा सूक्तम् । कुन्तवदाप्नोति शत्रूनिति वा । कुत्सिततापको भगवानेव मुख्यतः कुन्तापः । कुं भूमिं तापयति सन्निहितः सवितरीति वा । तस्येदं सूक्तं भवति । कुत्सितं शरीरं तापयन्ति कृच्छ्रेण तपसा शोधयन्तीति कुन्तापाः क्रान्तदर्शिनो मुनयः । तेषामिदं सूक्तं भवति ।

अथ किञ्चिदिव मन्त्रार्थः । तत्राऽद्यास्तिस्रो नाराशंस्य ऋचः–

**हरिः ओ३म् ॥**

**इदं जना उप श्रुत[1] नराशंस[2] स्तविष्यते ।**
**षष्टिं सहस्रा नवतिं च कौरव[3] आ रुशमेषु दद्महे ॥ १ ॥**

---

१. **'उपश्रुतम्'** इति काश्मीरपाठः। २. **'नाराशंस'** इत्यप्याथर्वणः पाठः।
३. **'कौरम'** इति च ।

**उष्ट्रा यस्य प्रवाहिणो[1] वधूमन्तो द्विर्दश ।**
**वर्ष्मा रथस्य नि जिहीळते[2] दिव ईषमाणा उपस्पृशः ॥ २ ॥**

**एष इषाय[3] मामहे शतं निष्कान् दश स्रजः ।**
**त्रीणि शतान्यर्वतां सहस्रा दश गोनाम् ॥ ३ ॥**

नराशंसः स्तविष्यते इति प्रतृण्णम् । नरैराशंसनीयत्वान्नराशंसः । नरेषु स्तोतृषु स्थित्वा स्वयमेव स्वात्मानमाशंसतीति वा नराशंसः । स भगवानस्माभिः स्तोष्यते । तदिदं जना उपशृणुत । 'नाराशंसः स्तविष्यते' इति पाठे नराशंसोऽग्निर्यज्ञो वा । तत्र गतस्तदाराध्यो भगवान्नाराशंसः । 'उपश्रुतम्' इति पाठे सर्वैरुपश्रुतं यथा स्यात् तथोच्चैः स्तोष्यते । अवधारणे वा बिन्दुः । कौ यज्ञभूमौ शस्त्रमन्त्राणां शंसितरि स्थितः स्वयं रौतीति कौरवोऽपि भगवानेव । 'वृषभो रोरवीति' इति श्रुतेः । कौ रुवन् रमत इति कौरम इत्याथर्वणाः । हे कौरव, एषु स्तुतिवचनेषु प्रोच्यमानेषु, एतन्निमित्तं वा, षष्टिं सहस्राणि नवतिं च रुशं दीप्तं रुग्ममादद्महे । भगवदनुग्रहेण लप्स्यामहे, ऋत्विग्भ्यो वा दास्यामः । षष्टिः संवत्सरा इति प्रतिवत्सरं सहस्राण्यक्षय्याणि रुग्माणि भवन्ति । नवतिरिज्याः प्रधानदेवताः । तथाहि– प्रधानवायुना सह पञ्चाशन्मरुतः, अष्टौ वसवः, एकादश रुद्राः, विष्णुं विहायैकादशाऽदित्याः, नव प्रजापतयो ब्रह्मा चेति नवतिर्देवाः । तैः प्रत्येकं दत्ता नवतिश्च रुग्मभाराणां भवति ॥ १ ॥

उष्ट्राः क्रमेलका वृषभा वा । उष्ट्रीभिः सहिता विंशतिरुष्ट्राः यस्य रुग्मस्य रथस्य वा वाहकाः, तस्य रथस्य वर्ष्माणि नि जिहीळते वोढुं निराकुर्वन्ति । 'जिहीषते' इति पाठेऽपि स एवार्थः । कीदृशस्य रथस्य? रुग्मभारेण दिवो

१. **'प्रवाहणो–'** इति च।
२. **'जिहीषते'** इति पैप्पलादाः।
३. **'ईषाय'** इति कचित्। **'एष ऋषये'** इति च।



द्योतमानस्य । कीदृशाः उष्ट्राः? उपस्पृशः दीर्घग्रीवतया मुखमुन्नमय्य उपरिभागं स्पृशन्तो गगनं पिबन्त इव ईषमाणा धावन्तः । तदिमे आदिमे ऋचौ बृहतीबद्धौ [८+८+१२+८ =३६] । अन्त्या चतुर्दशी पङ्क्तिः । अन्या अनुष्टुभः ॥ २ ॥

एष इषाय अभीष्टदानाय प्रभुरिति मन्यामहे । 'एष ऋषये' इति पाठे ऋषये ज्ञानिने सर्वेष्टद इति मन्यामहे । 'छिन्द्यां स्वबाहुमपि वः प्रतिकूलवृत्तिम्' इति हि भागवते । किं तदभीष्टम्? शतं प्रभूतान् निष्कान् सुवर्णपणान्, दश प्रभूताः सुवर्णस्रजः, अश्वानां त्रीणि शतानि, गवां च दश सहस्राणि च तेन मन्महे । तदेवं बृहतीभ्यामनुष्टुभा च स्तुतो नराशंसो वासुदेवो गायत्र्या रसं सञ्जहार । बृहतीति जगतीगर्भा गायत्र्येव हि । अनुष्टुबिति चानुष्टब्गर्भा गायत्र्येव । ततश्च द्वाभ्यां बृहतीभ्यां तिस्रो गायत्र्य एव सम्पन्नाः । एवं तिसृभिरनुष्टुप्पादैश्च पुनरेकेति चतस्रो गायत्र्यः । एवमाभिर्नाराशंसीभिः चतस्रो गायत्र्यः पुनरधिकेनाष्टाक्षरेणाभिमन्त्रिताः स्वोपरिगताभ्यां द्वाभ्यां छन्दोभ्यामुपबृंहिताः रससम्भृता बभूवुः ॥ ३ ॥

एतास्तिस्रो 'नराशंस स्तविष्यते' इति नराशंसपदघटिता न रीयन्त इति नरैर्मुक्तैः संस्तुतस्य नराशंसस्य वासुदेवस्येमा ऋच इति च नाराशंस्यः । अथ तिस्रो रैभ्यः–

**वच्यस्व रेभ वच्यस्व वृक्षे न पक्वे शकुनः ।**
**[1]नष्टे जिह्वा चर्चरीति क्षुरो न भुरिजोरिव ॥ ४ ॥**

**प्र रेभासो मनीषया[2] वृथा गाव इवेरते ।**
**अमोत पुत्रका एषामु मोदका[3] उपासते ॥ ५ ॥**

१. **'निष्टे'** इति का.पाठः। 'ओष्टे' इति क्वचित्।
२. **'मनीषा'** इत्याथर्वणः पाठः।
३. **'एषाममोत गा इवासते'** इति च ।**'एषाममोत गा उपासते'** इति कचित्।

**प्र रेभ धियं[1] भरस्व गोविदं वसुविदम् ।**
**देवत्रेमां वाचं [2]शृणीहीषुर्ना वीरस्तारम्[3] ॥ ६ ॥**

रे रेभ रे स्तोतः, पक्वफले वृक्षे पिक इव मधुरं वच्यस्व स्तुहि । छन्दसां रसे नष्टे तदाधानाय भगवन्तं स्तोतुं तेन केशानामिव दोषाणामपनयनेन शोभातिशयाधानार्थं ते जिह्वा चर्चरीति अधिकं चञ्चला भवति । कथमिव? क्षुरो न भुरिजोरिव । नापितस्य भुरिजोः बाह्वोः स्थितः क्षुर इव । 'निष्टे' इति पाठे ते जिह्वा निश्चयेन चर्चरीति । 'ओष्ठे' इति पाठे स्फुटोऽर्थः ॥ ४ ॥

वृथा निष्कारणं फलकामनां विना, गाव इव पुङ्गवा इवाभीष्टवर्षणपटवो गभीरनादा रेभासः स्तोतारः मनीषया प्रज्ञापूर्वकं प्र ईरते स्तोतुं प्रवर्तन्ते । 'मनीषा' इति पाठेऽपि समानोऽर्थः । एषां पुत्रका उत तनया अपि, शिष्या अपि वा, अमा सहैव स्तोतुमुप आसते तेषां समीपे तिष्ठन्ति, तेन तेषां मोदकाः सन्तः । 'अमोत गा इवाऽसते' इति पाठे महद्भिर्वृषैः सहाणवो गावस्तर्णका यथाऽऽसते तथेत्यर्थः । प्रधानर्त्विग्भिः सह पुत्रस्थानीयाः सहायका ऋत्विजो वा ॥ ५ ॥

हे स्तोतः, इषुर्न इषुरिव,लक्ष्यवेधे दर्शितपाटवः, त्वं तादृशीं धियं वीरः आ समन्तात् प्रभरस्व । याऽस्माकं गा वसूनि च वेदयति प्रापयति । 'धीम्' इति पाठेऽपि समानोऽर्थः । देवत्रा देवेषु इमां स्तुतिरूपां वाचं तारमुच्चैः शृणीहि विध्य । 'शरो ह्यात्मा ब्रह्म तल्लक्ष्मुच्यते । अप्रमत्तेन वेद्धव्यम्–' इति हि श्रुतिः । 'श्रीणीहीषुः' इति पाठे प्रसादयोग्यपरिपाकवतीं कुरु । शॄञ् हिंसायाम् । श्रीञ् पाके । तदेवं तिसृभिरनुष्टुब्भिः स्तुतो रैभ्योऽनिरुद्धस्त्रिष्टुभो रसं सञ्जहार । तिसृभिरनुष्टुब्भिर्द्वे त्रिष्टुभौ भवतः । तेन पुनरवशिष्टेनाष्टाक्षरेण पादेनोपबृंहिते रसेन सम्भृते भवतः ॥ ६ ॥

१. **'धीम्'** इति च।
२. **'श्रीणीहीषु–'** इति च।
३. **'वीरास्तारम्'** इति काश्मीरपाठः।



एतास्तिस्रो 'वच्यस्व रेभ वच्यस्व' इति रेभपदघटिता इति रैभ्य ऋचः । नरेषु स्थितोऽनिरुद्धः स्वयमेव मन्त्रान् रेभत इति रेभः । रेभृ शब्दे । तस्येमा इति च । अथ पारिक्षित्यश्चतस्रः–

**राज्ञो विश्वजनीनस्य यो देवो मर्त्याँ अति ।**
**वैश्वानरस्य सुष्टुतिमा सुनोता[1] परिक्षितः ॥ ७ ॥**

**[2]परिक्षिन्नः क्षेममकरत् तम आसनमासरम्[3] ।**
**[4]अराय्यं कुर्वन् कौरव्यः पतिर्वदति जायया ॥ ८ ॥**

**कतरत् त आ हराणि दधि मन्थां३ परिस्रुतम्[5] ।**
**[6]जाया पतिं वि पृच्छति राष्ट्रे राज्ञः परिक्षितः ॥ ९ ॥**

**अभीव स्वः प्र जिहीते यवः पक्वः पथो[7] बिलम् ।**
**जनः स भद्रमेधते[8] राष्ट्रे राज्ञः परिक्षितः ॥ १० ॥**

परिक्षितः विश्वं परिक्षपयतः, हृदयकमले निवसतः, सर्वत्र परिगतस्य वा । परित ईक्षत इति सर्वद्रष्टुर्वा । परीक्षिदेव परिक्षित् । 'सर्वेक्षणात् परो विष्णुः परीक्षिदिति कीर्तितः' इति हि स्मरन्ति । राज्ञो दीप्तस्य भक्तरञ्जनस्य वा, विश्वजनहितस्य, अत एव वैश्वानरस्य विश्वजीवान्तरस्य नारायणस्य सुष्टुतिमा सुनोत प्रेरयत। यो देवः सर्वान् मर्त्यान् क्षरजीवानतीत्य वर्तते । 'शृणोता' इति पाठे– इमां सुष्टुतिमाशृणुत ॥ ७ ॥

यजमानः स्वजायया सह सम्भाषमाण एवं वदति । किमिति? कौ यज्ञभूमौ क्रियमाणः रवः वेदघोषः कौरवः । तेन स्तूयमानः कौरव्यः परिक्षिन्नारायणः । 'परिच्छिन्नः' इति पाठे परिच्छिन्नेनाणीयसा रूपेण हृदि साक्षात्कृतो

१. **'शृणोता'** इति कश्चित्।
२. **'परिच्छिन्नः क्षेममकरोत्'** इति च।
३. **'–चरन्'** इति च।
४. **'कुलायं कृण्वन्'** इति च।
५. **'परिश्रुतम्'** इति च।
६. **'जायाः पतिम्'** इति च।
७. **'परो–'** इति कश्चित्।
८. **'भद्रमेधति'** इति च।

नारायणः । आसनं सर्वतो निरासकं आ समन्तात् प्रसृतं नस्तमः अराय्यं अनुपद्रवदं कुर्वन् नः क्षेममकरोदिति । करोत्विति वा । 'आसनमाचरन् कुलायं कृण्वन्' इति पाठे– सर्वतो निरासकं तम आचरन् नाशयन् । चर गति-भक्षणयोः । आसनमाचरन् आसनवदधःपातयन् वा । तथा कुलायं कुत्सितलयोपेतं कुर्वन् इत्यर्थः ॥ ८ ॥

राज्ञः परिक्षितो राष्ट्रे यज्ञभूमौ यजमानजाया पतिं विविधं पृच्छति । किमिति? मन्थम्मन्थं परिस्रुतम्, मन्थानं परितः स्रुतं वा, कतरद् दधित आहराणीति । गव्यसमृद्धिः सर्वां समृद्धिमुपलक्षयति । 'मन्थां परिश्रुतम्' इत्याथर्वणपाठेऽपि 'मथनजातं परिस्रुतम्' इत्येवार्थः । तृतीयोऽतिशये । 'जायाः' इत्यपि बहुवचनमाद्यर्थे । जायाद्याः स्त्रियो विविधं पृच्छति पृच्छन्ति । पृच्छा सर्वासामपि समृद्ध्येकविषयेत्येकवचनम् ॥ ९ ॥

यो राज्ञः परिक्षितो राष्ट्रे भवति स जनो भद्रमेधते । यस्य राष्ट्रे वासमिच्छन् जनः स्वर्गमप्यभितः प्रजिहीत इव त्यजतीव । नेच्छतीत्येतत् । अत्र भगवद्भक्ता-नामधिकसाहचर्यलाभात् । यत्र समृद्धः पक्वो यवः । आहारसमृद्धिरित्येतत् । समृद्धः सञ्चारपथः । विहारसमृद्धिरित्येतत् । समृद्धं बिलं सम्पन्निगूहनस्थानं च । सुरक्षिततेत्येतत् । पथः सञ्चारमार्गादापदि निगूहनार्थं बिलमिति वा । 'परो बिलम्' इति पाठे परः श्रेष्ठः समृद्ध इति स्फुटम् । तदेवं चतसृभिरनुष्टुब्भिः स्तुतः परिक्षित् सङ्कर्षणो जगत्या रसं सञ्जहार । चतस्रोऽनुष्टुभः पुनर्द्वे जगत्यावेका चानुष्टुब् भवति । एवमष्टाक्षरेणैकैकेन पादेनोपबृंहितपादा जगती रसेन सम्भृता भवति ॥ १० ॥

एताश्चतस्रः 'आ सुनोता परिक्षितः' इति परिक्षित्पदघटिततया पारिक्षित्यः । जगतः परिक्षयणात् परिक्षितः सङ्कर्षणस्येमा इति च ।



अथ कारव्यश्चतस्रः–

**इन्द्रः कारुमबूबुधदुत्तिष्ठ वि चरा चरन्[1] ।**
**ममेदुग्रस्य चर्कृतिः[2] सर्व इत् ते पृणादरिः ॥ ११ ॥**

**इह गावः प्र जायध्वमिहाश्वा इह पूरुषाः ।**
**इहो सहस्रदक्षिणो वीरस्त्राता नि षीदतु[3] ॥ १२ ॥**

**[4]मैमा इन्द्र गावो रिषन्मो आसां गोपती रिषत्[5] ।**
**मासाममित्रयुर्जन इन्द्र मा स्तेन ईशत ॥ १३ ॥**

**[6]उप वो नर एमसि सूक्तेन वचसा वयं भद्रेण वचसा वयम् ।**
**[7]चनो दधिष्व नो गिरो न रिष्येम कदा चन ॥ १४ ॥**

**॥ इति कुन्तापसूक्तं सम्पूर्णम् ॥**

इन्द्रः परमेश्वरो नारायणः कारुं यज्ञकर्तारमबोधयत् । किमिति? उत्तिष्ठ जागृहि । कर्तव्यं कर्माऽचरन् विचर विहर । 'विचरा जनम्' इति पाठे –विहितं चरेति कारुं जनमबूबुधदित्यन्वयः । 'जरन्' इति पाठे– आयुर्जरयन् विचर । येनाहं प्रीतः स्याम् । एवमकुर्वति त्वय्यहमुग्रः स्याम् । मम पुनरुग्रस्य चर्कृतिः कर्मेदम् । येन ते सर्वोऽप्यरिवर्गः पृणात् सन्तुष्येत् ॥

हे गावः, इहास्मद्गृहे प्रजायध्वम् । हे अश्वाः, हे पूरुषाः, यूयमपीह प्रजायध्वम् । इह सहस्रदक्षिणो वीरस्त्राता यजमानोऽपि सुखं निषीदतु । भगवान् वा निषीदतु । 'सहस्रदक्षिणोऽपि पूषा निषीदति' इति पाठे, पूषा सम्पत्पुष्टो यजमानः पूर्णो वा भगवान् ॥ १२ ॥

---

१. **'जनम्'** इति च । **'जरन्'** इति क्वचित् ।   २. **'चर्कृधि'** इति च ।
३. **'–दक्षिणोऽपि पूषा निषीदति'** इति च ।
४. **'नेमा–'** इति काश्मीरपाठः । आथर्वणिकानां च ।   ५. **'गोप रीरषत्'** इति च ।
६. **'उप नो न रमसि'** इति च । 'उप नरं नोनुमसि' इति क्वचित् ।   ७. **'वना दधिष्व'** इति च ।

हे परमेश्वर, इमा गावो मा रिषन् मा नाम नशन्। आसां गोप्ता यजमानश्च मा रिषत् मा नशत्। आसाममित्रेण सङ्गतोऽपि जनः शत्रुपक्षपाती मा ईशत मा ईशिष्ट, आसां हिंसने मा भूत् समर्थः। हे परमेश्वर, मा च स्तेन ईशिष्ट । तदेवं तिसृभिरनुष्टुब्भिः स्तुत इन्द्रः प्रद्युम्नोऽनुष्टुभो रसं सञ्जहार ॥ १३ ॥

उप व इति चतूरूपो नारायणः स्तूयते चतुर्णामपि च्छन्दसां सवीर्यत्वाय। नरो मनुष्या वयं युष्माकं शरणमुपगताः, सूक्तेन च भद्रेण च स्तुतिवचसा। 'उप नरं नोनुमसि' इति पाठे नरं नाशरहितं चतूरूपं नारायणं नोनुमः। 'उप नो न रमसि' इति पाठे नः न उपरमयसि, उपरतान् न करोषि। न कुरु वा। सदा त्वत्पूजारतान् कुरु। येन सूक्तेन वचसा वयं त्वां स्तूयामेत्यध्याहारः। नो गिरः चनः सुखं यथा स्यात् तथा दधिष्व हृदि धारय। चनो दधिष्व मनसि धारयेति वा। 'वना दधिष्व' इत्याथर्वणपाठे वननीया नो गिरो दधिष्व। यथा वयं कदाऽपि त्वदनुग्रहेण न नश्येम। 'बुद्धिनाशाद् विनश्यति' इति ह्युक्तम्। एताश्चतस्रः 'इन्द्रः कारुमबूबुधत्' इति कारुपदघटिता इति कारव्य ऋचः। कारोः सृष्टिकर्तुः प्रद्युम्नस्य मोक्षकर्तुर्नारायणस्य चेमा इति च ॥१४॥

अस्मिन्नेव खण्डे उपरिष्टात् पठ्यमानस्य 'न तासु न्यूङ्खयेत्। नीवीव नर्देत् स हि तासां न्यूङ्खः' इति वाक्यस्यार्थः। तासु नाराशंसीषु पठ्यमानासु न्यूङ्खं न कुर्यात्। किन्तु नीवी यथा नर्दति तथा नर्देत्। तदेव नाराशंसीनां न्यूङ्ख-स्थानीयमिति। का नीवी? कटिबन्धनं वस्त्रम्। निवीयत इति नीवी। वेञ् तन्तुसन्ताने। वैयाकरणास्तु व्येञ् संवरण इत्यतो यलोपेन नीवीपदं निर्वदन्ति। यथा सुधौतं विकासितं वस्त्रं पटपटायते तद्वन्नाराशंसीः पठेदिति। न्यूङ्खकरणमिति किमुच्यते? आश्वलायन उवाच–'द्वितीयं स्वरमोकारं त्रिमात्रमुदात्तं त्रिः। तस्यतस्य चोपरिष्टादपरिमितान् पञ्च वाऽर्धौकारान-नुदात्तान्। उत्तमस्य तु त्रीन्' इति। अयमर्थः– अर्धर्चयोर्यो द्वितीयः स्वरः संहितावस्थायां तमोकारं त्रिमात्रमुदात्तं कृत्वा त्रिः ब्रूयात्। तस्यतस्यौकारस्योपरिष्टादर्धौकाराननुदात्तानपरिमितान् त्रीन् चतुरः पञ्च वा



ब्रूयात्। अर्धश्चासावोकारश्चेत्यर्धौकारः। उत्तमस्यौकारस्योपरिष्टात् त्रीनेवार्धौकारान् ब्रूयात्। तदिदं निदर्शनं भवति– 'आपो३उउउउउ ओ३उउउउउ ओ३उउउश्च स्थः स्वपस्य पत्नीः सरस्वती तद् गृणते' इत्यादि। अत्र उकाराकारेण ये दर्शितास्तेऽर्धौकारा इति बोध्यम्। कर्णाटकभाषायामर्धौकारः स्फुटं व्यवह्रियते 'ಒ' इति। वैयाकरणा अप्याहुः-' न्युङ्खा ओङ्काराः षोडश' इति। न्यूङ्ख इति न्युङ्ख इति चानर्थान्तरम्। ओङ्कारा इत्योकाराः। अर्वाचीनास्तु 'नी वी व नर्देत् स हि तासां न्यूङ्खः' इत्येतदन्यथा व्याचक्षते– 'नी इति दीर्घः सांहितः। नि वि इव इति पदपाठः। नि इव नर्देत् वि विशेषेण निनर्दमेव कुर्यात्' इति। निनर्दशब्दार्थं चाऽहुः– 'तृतीयपादस्य प्रथमाक्षरमनुदात्तत्वेन द्वितीयाक्षरमुदात्तत्वेनोच्चारयेदिति यदस्ति सोऽयं निनर्दः' इति। तेषां पक्षे 'नी वीव' इति पदभङ्गश्चार्थभङ्गश्च। सुन्दरः प्रतनोऽर्थः ॥१४ ॥

**कुं तापरहितां कुर्वत् कुन्तापं सूक्तमद्भुतम्।**
**इदमाचार्यगोविन्दो व्याचकार यथामति ॥**

**इत्याचार्यगोविन्दस्य कृतिषु कुन्तापसूक्तभाष्यं सम्पूर्णम् ॥**

—०—

**ॐ ॥ ये दुर्भगन्ति जगति भवता सुभगन्ति ते ।**
**तस्मात् त्वमेव भगवान् भगमन्त्रैरभिष्टुतः ॥**

वाजसनेयसंहितायां त्रयोविंशेऽध्याये दश कण्डिकाः (२३–३१) अश्लील-भाषणमन्त्रा इति प्रसिद्धाः, नवानुष्टुभ एकोपरिष्टाद् बृहती, अभिमेथिन्य ऋच इति याज्ञिकम्मन्या मन्यन्ते । तथाहि कात्यायनः–'अध्वर्युब्रह्मोद्गातृहोतृक्षत्तारः कुमारीपत्नीभिः संवदन्ते यकासकाविति दशर्चस्य द्वाभ्यांद्वाभ्यां हये-हयेऽसावित्यामन्त्र्याऽमन्त्र्य' इति । व्याचख्यौ च महीधरः–'अध्वर्य्वादयः पञ्च हयेहयेऽसाविति सम्बुद्ध्यन्तनामोच्चारणपूर्वकं सम्मुखीकृत्य यकासकाविति दशर्चसम्बन्धिनीभ्यामृग्भ्यां कुमारीपत्नीभिः सोपहासं संवदन्ते' इत्यादि ।

भागवते त्वन्यथैवोक्तम्–'मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्य इत्यहम्' इति । उद्धवं प्रति भगवद्वचनमिदम् । अयमर्थः–यद् वेदवचनं मामुद्दिश्य कर्म विधत्त इत्याहुः तदप्यन्ततो मामेवाभिधत्ते । अश्लीलार्थत्वादिना विविधं कल्पयित्वा गुह्यभाषयाऽहमेवापोह्यः' इति । तेन याज्ञिकाः कर्ममात्रप्रज्ञाः किमपि जल्पन्तु । तत्ववादिनां तु सर्वमपि वेदवाङ्मयं मुख्यतो भगवन्तमेवाभिधत्ते । भगवद्वचनप्रामाण्यात् । तत एतासां दशकण्डिकानामर्थं वर्णयामः, यया तासां भगवद्गुणाभिधानपरता स्यात् ।

अवश्यं चैतदेवं वक्तव्यम् । त्यक्तकामा निरग्नयो यतयोऽपि हि समस्तवेदेष्वधिकारिणः । ते पुनरस्यामश्लीलभाषणकण्डिकायां कमर्थमभिसन्दधीरन् भगवन्तं नारायणमृते?



उपक्रमोपसंहाराभ्यां चैतदवगम्यते । तथाह्युपक्रमे एकान्नविंशी कण्डिका–

**गणानां त्वा गणपतिꣳ हवामहे प्रियाणां त्वा प्रियपतिꣳ**
**हवामहे निधीनां त्वा निधिपतिꣳ हवामहे वसो मम ।**
**आहमजानि गर्भधमा त्वमजासि गर्भधम्' इति ।**

ऋक्समाख्यानेन भगवदाह्वानमन्त्रोऽयमिति स्फुटम् । कर्मवादिनस्तु मन्त्रमेतमश्वमेधेऽश्वस्तुतिपरमाचक्षते । तत्ववादिनस्तु भगवत्परमर्थमनु-सन्दधते । तथाहि– हे मम वसो हृदयकमलवासिन् भगवन्, त्वामहं जगद् गर्भे धत्त इति गर्भधम्, उदरस्थजगतम्, आ अजानि अवगच्छामि । अज गतौ । हे अज चतुर्मुखगत, त्वं गर्भधं विश्वधारकं परं ब्रह्मासि । अतस्त्वां जीवगणानां मध्ये ये मुख्यगणा ब्रह्माद्यास्तेषामपि पतिमाह्वयामः पूजास्वीकारार्थमा-गच्छेति । जीवगणानामिन्द्रियगणपतिं वा । ये प्रियाणामपि प्रियास्तेषां पतिम्, सर्वाधिकप्रियम् । ज्ञानानन्दनिधीनां शतानन्दानामपि, विश्वनिधीनां हिरण्यगर्भाणामपि निधिर्जगन्माता श्रीः । तस्याः पतिमाह्वयामः ।

उपसंहारे च भगवदभिषेकमन्त्रः पठ्यते । तथाहि द्वात्रिंशी कण्डिका–

**दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।**
**सुरभि नो मुखा करत् प्र ण आयूꣳषि तारिषत् ॥**

महीमयीं द्रोणीं दधत् जलधौ क्रामतीति, क्रामन्नृषीन् मनुं चावतीति दधिक्रावा मत्स्यः । मन्दरं दधत् जलधौ क्रामन् देवानवतीति दधिक्रावा कूर्मः । उदधिक्रावा वा मत्स्यः कूर्मश्च दधिक्रावा । रामश्च कृष्णश्च । दण्डकमण्डलू दधत् क्रामन् देवानवतीति दधिक्रावा दधिवामनः । हिरण्याक्षकशिपू जयन् जिष्णुर्वराहो नरसिंहश्च । 'विष्णुर्जिष्णुर्जगद्धाता' इति नरसिंहशतनामसु । जिष्णुरिति 'लोकजिज्जिनः' इत्युक्तो बुद्धोऽपि । आशु वाति क्षत्रियाधमानिति अश्वः परशुरामः । अश्वग्रीवत्वाच्चाश्व इति । आशु वाति लङ्कामित्यश्वो रामः । आशु

वापयति कौरवसेनां प्रत्यर्जुनरथमित्यश्वो वासुदेवः। युगान्ते वाजो युद्धमस्यास्तीति वाजी कल्की । एवं दशरूपस्य यजुर्मन्त्रोपदेष्टुर्वाजिवक्त्रस्य दशभिरश्लीलभाषणमन्त्रैः स्तुतिमकारिषम् । एवं स्तुत्या दशात्मा नो मुखानि मुखं वा सुरभि करोतु । यदश्लीलभाषणेनासुरभि जातम्, तद् भगवद्गुणसुगन्धितं भवतु । न आयूंषि प्रतारिषत् वर्धयतु मुक्तिदानेनेति ।

अथच मुक्तगणान् दधत् क्रामतीति दधिक्रावा वासुदेवः। संसारज्जाययन् जिष्णुः सङ्कर्षणः । आशु वापयति जनयतीति अश्वः प्रद्युम्नः । वी गतिप्रजनकान्त्यसनखादनेषु । अशं गर्भवासदुःखं वापयति प्रापयत्यपगमयति चेति वा। पालनार्थं वाजमन्नं दधद् वाजी अनिरुद्धः। 'प्रजा वै वाजः' । पालकत्वेन तद्वान् वा । तस्यैतस्य चतुर्मूर्तेर्भगवतो दध्नाऽभिषेकमकार्षम् । अभिषिक्तः स्तुतश्च भगवान् नो मुखं सुरभीकरोत्वित्यादि समानम् ।

काण्वास्तु पञ्चविंशेऽध्याये द्वादशमन्त्रमेकमनुवाकमाहुः षष्ठम्। यकासकावित्याद्या दश, आदौ 'उत्सक्थ्याः...' इत्येका, अन्ते 'दधिःक्राव्णः–' इत्येका चेति।

आद्यन्तयोर्मङ्गलाचरणमेतत्। 'दधिक्राव्णः' इति व्याख्यातम्। 'उत्सक्थ्याः' इत्यस्याः आध्यात्मिकोऽर्थोऽधुना प्रस्तूयते। तथाहि मन्त्रः–

**उत्संक्थ्या अव गुदं धेहि समञ्जिं चारया वृषन् ।**
**यः स्त्रीणां जीवभोजनः ॥**

अयमर्थः– अश्वदेवत्येयं गायत्रीति यज्ञपरायणाः। अश्वग्रीवदेवत्येति तत्ववादिनः । ब्रह्मण आर्षम् ।

अथ भगवान् शुक्लयजुर्वेदद्रष्टाऽप्यश्वः। 'वाजिरूपेण सूर्येण प्रोक्तं वाजसनेयकम्' इति स्मरणात् । उत्सक्थि ऊर्वोरुपरि आगुदप्रदेशं यथा वशगं स्यात् तथा तन्नियन्त्रणे अवधानं देहि। अथ च उत्सक्थ्याः उत्थितोरुकायाः। कामातुराया इत्यर्थः । गुदं कामकेळिं अवस्तात् नीचैः निधापय । गुदतिः क्रीडार्थः । 'गुद



क्रीडायामेव' इति सावधारणं धातुपाठं पठन्ति धातुपारायणिकाः । हे वृषन् अभिलषितवर्षिन् भगवन् हयग्रीव, अञ्जिरञ्जनं सक्तिरिति यावत्। अञ्जू म्रक्षणे। सक्तिश्च द्विविधा। भगवति सक्तिरिति। संसारे सक्तिरिति। भगवति सक्तिर्भक्तिः । अञ्जिं भगवति सक्तिरूपां भक्तिं सं चारय मयि सङ्गमय । संसारेऽनुरक्तिरूपां सक्तिं मत्तः सम्यक् चारय अपगमय । दीर्घेण भक्तिकातर्यमवधारयति । यः वेदाविष्कर्ता हयग्रीवः, हयरूपेण शुक्लयजुर्वेदाविष्कर्तः, स्त्रीणां सप्तच्छन्दोमानिनीनां स्वाहादिशच्यन्तानां देवस्त्रीणां जीवभोजनः। जीवयतीति जीवः। प्राणधारणशक्तिप्रदः। भोजयतीति भोजनः । दिव्यभोगप्रदश्च । प्राणप्रियो भोगप्रद इति वा ।

तदेवं दशभिरश्लीलभाषणमन्त्रैर्दशात्मा भगवानेव मुख्यतः स्तूयत इत्यधिगतम् । अश्लीलं भाषणमपि मन्त्रार्थ इत्यपि यदिच्छया याज्ञिकानां मनसि पुस्फोर स भगवानेवास्माकमश्लीलभाषणनामा । तदुक्तम्–'सर्वे वेदा यत्पदमामन्ति' इति। 'वेदैश्च सर्वैरहमेव वेद्यः' इति च। तदिदानीं तान् मन्त्रान् व्याख्यास्यामः । तत्र प्रथमं मत्स्यावतारमाह–

**यकाऽसकौ शंकुन्तिकाऽऽहलगिति वञ्चति ।**
**आ हन्ति गभे पसो निगल्गलीति धारका ॥ १ ॥**

याऽसौ अल्पशकुन्तसदृशी मत्स्यमूर्तिः। इवार्थे कन्। अल्पत्वार्थेऽनुकम्पायां च स्त्रीलिङ्गम्। नतु स्त्रीत्वविवक्षया। मत्सीषु मत्सीरूपोऽन्तर्यामीति बोधनार्थं च। श्राद्धदेवस्याञ्जलिं वञ्चति गच्छति। 'अहो अनुकम्पनीयोऽयमणुकोऽनाथो मत्स्यः' इति मतिं जनयित्वा तं वञ्चयतीव च स्वावतारकृत्यनिर्वाहार्थम् । कथम्? आहलगिति। अनुकारशब्दोऽयम्। आ समन्तात् हलक् हलक् इति विह्वलेव प्लवमानाऽञ्जलौ । ततो वर्धमानः बृहत्तनुर्भूत्वा भूमय्या नौकाया धारको भूत्वा निगल्गलीति जलधौ पुच्छास्फालनेन गलगलेति नादं जनयन् सञ्चरति। विशेष्यनिघ्नतया अत्रापि धारका इति स्त्रीलिङ्गनिर्देशः। 'इमे मम

दाराः' इति यथा। गल स्रवणे। निगिरते वा तेषां नौकागतानामृषीणां श्राद्धदेवस्य च प्रळयभयम्। 'अचि विभाषा' (अ.सू.८.२.१) इति रस्य लः। अवतारस्य प्रयोजनान्तरमाह–आहन्ति गभेऽपसः। अवस्येवापेरिवापस्यापि अल्लोपः। गभे गभीरेऽर्णवे वेदमपहृत्य अपसः अपसरद् हयग्रीवाख्यं रक्षः आ हन्ति संहरति च। गहनं भगवत्तत्वं भात्यत्रेति गभो वेदराशिर्वा। तद्रक्षणार्थं रक्ष आहन्तीति वा ॥ १ ॥

अथ कूर्मावतारमाह–

**य॒कोऽस॒कौ श॑कुन्त॒क आ॒ह॒ल॒गिति॒ वञ्च॑ति ।**
**विव॑क्षत इव ते॒ मुख॒मध्व॑र्यो॒ मा न॒स्त्वम॒भिभा॑षथाः ॥ २ ॥**

मन्त्रोऽयमुपरिष्टाद्बृहतीबद्धः। पादास्त्रयोऽष्टाक्षराः, तृतीयो द्वादशाक्षर इति। योऽसौ शकुं शक्तिं मन्दरं पृष्ठे दधत् तनोतकीव किञ्चिद्विस्तारयन्निव स्थितः कूर्मः। बृहदण्डवोढुः मन्दरधारणमिदं कियदित्यर्थः। एवम्भूतः सन् देवानामर्थे जलधेरन्तर्वञ्चति चलति। तेनासुरान् वञ्चयति च। कथं चलति? आहलगिति अम्भसि हलहलायमानः। ततः अमृतकलशं गृहीत्वा जलधेरुत्थितस्य तव धन्वन्तरेः देवान् प्रति कामपि शुभवार्तां विवक्षतइव सस्मितं मुखं भाति। ततः मोहिनीरूपस्य किञ्चिद् विवक्षतइव ते मुखमसुरान् वञ्चयति। असुरान् सुरांश्च अध्वरे युनक्तीत्यध्वर्यो भगवन्नजित, नस्तव भक्तान् नः निषेधवचनः सन् ज्ञानादिकं निराकुर्वन्, मोहयन्नित्यर्थः, कदाऽपि माऽभिभाषथाः, मा वदीः, किन्तु भूतिकराणि वदेरित्यर्थः ॥ २ ॥

अथ वराहावतारमाह–

**मा॒ता च॑ ते पि॒ता च॒ तेऽग्रं॑ वृ॒क्षस्य॑ रोहतः ।**
**प्रति॑ला॒मीति॑ ते पि॒ता ग॒भे मु॒ष्टिम॑तꣳसयत् ॥ ३ ॥**



हे वराह, ते वृक्षस्य, व्रश्चू च्छेदने, त्वया च्छिन्नस्य, हतस्य हिरण्याक्षस्य माता दितिः ते तव माता च। वामनावतारे मातुर्भविष्यन्त्या अदितेर्भगिनीत्वात्। साक्षात् पिता च भविष्यति। कश्यपो हि पिता हिरण्याक्षस्य च वामनस्य चेति विचित्रां भगवल्लीलामनुसन्दधाति। तावुभावपि तव मातापितृत्वेनाग्रं मोक्षाख्यं पदं रोहतः रोक्ष्यतः। इयमपि विचित्रा ते लीला यत् पुत्रावजीघनः, तमसि चापीपतः। पितरौ पुनरुददीधरः, मोक्षपदवीमप्यरोरुहः। तामसौ पुत्रौ जनयतोः कथमयमनुग्रहः? आह–हिरण्यकयोर्जनने प्रतिलामि, तिल स्नेहने, प्रकर्षेण दितेः स्नेहं जनयामीति मन्वानः, न केवलम्, भगवदवतारयोः पूर्वरङ्गनिर्माणेन भगवत्प्रीतिपात्रं भूयासमिति जानन्, भगवदिच्छानुसारेणैव गभे दितेर्गर्भे, पतिसङ्गमेन भातीति अतिकामिन्यां भार्यायां वा, मुष्टिं वीर्यमतंसयत् निचिक्षेप। तसिमलङ्कृतौ पठन्ति। निक्षेपार्थोऽपि पठनीयः। स्थाने निक्षेप एव ह्यलङ्करणं नामापि। मुष्णन्ति एनं नार्य इति मुष्टिर्वीर्यम्। मुष स्तेये ॥ ३ ॥

अथ नृसिंहावतारमाह–

**मा॒ता च॑ पि॒ता च॒ तेऽग्रै॑ वृ॒क्षस्य॑ क्रीडतः ।**
**विव॑क्षत इव ते॒ मुख॒ं ब्रह्म॒न् मा त्वं व॑दो ब॒हु ॥ ४ ॥**

हे नरसिंह, त्वया वृक्षस्य हिरण्यकशिपोर्मातृस्थानीयाऽदितिश्च, पिता काश्यपश्च , अग्रे उपरितनेऽवतारे तव मातरपितरौ भूत्वा क्रीडतः। तेन पुण्येन, संसारवृक्षस्याग्रे मोक्षे क्रीडिष्यतः। अहो तवासीमा कृपालुता। अथ हिरण्यकशिपोर्हननानन्तरम्, पञ्चहायने बालके पुरः स्थिते, तमङ्के विवक्षत इव वोढुमिच्छत इति प्रसन्नं ते मुखं बभूव। अथापि बहु वदः वक्ता न भवसि, किन्तु मौनगर्भेण प्रसादेनैव तमुद्दिधीर्षसि ॥ ४ ॥

अथ वामनावतारमाह–

**ऊ॒र्ध्वामे॑ना॒मुच्छ्रा॑पय गि॒रौ भा॒रꣳ हर॑न्निव ।**
**अथा॑स्यै॒ मध्य॑मेधताꣳ शी॒ते वाते॑ पु॒नन्नि॑व ॥ ५ ॥**

भगवन्तं गिरतीति गिरिर्वेदराशिः । तत्र वाच्यतया सन्निहितः । त्रिपदव्याजेनासुरनिमित्तं भूमेर्भारं परिहरन्निव, ऊर्ध्वां सर्वदेवोत्तमया त्वज्जायया भूम्याऽभिमन्यमानाम्, अत एव सर्वत ऊर्ध्वाम्, एनां पृथिवीमुच्छ्रितां कुरु । असुराणां भारेणाधः पतितामिव स्थिताम् । अथास्याः पुण्यभूमेः मध्यभागः आर्यावर्तः, यत्र वामनाधिष्ठितः सिद्धाश्रमः, यत्र विश्वामित्रादयस्तपस्तेपुः, वैदिकज्ञानविजृम्भणेन समेधताम् । शीते वाते वाति सति हिमगिरिः आर्यावर्तं पुनन्निव समेधयतु भगवत्प्रज्ञाम् ॥ ५ ॥

अथ भार्गवावतारमाह–

**ऊर्ध्वमेनमुच्छ्रयताद् गिरौ भारꣳ हरन्निव ।**
**अथास्य मध्यमेजतु शीते वाते पुनन्निव ॥ ५ ॥**

भूमेर्भारं हरन्निव गिरौ महेन्द्रपर्वते तपस्यन्, त्रिःसप्तकृत्वोऽवतारितभूभारोऽपि पुनर्द्वापरे द्वाविंशं भूभारं हरन्निव भीष्मद्रोणकर्णादीन् सज्जीकर्तुमेव गिरौ तपस्यन्निव स्थितम्, एनं देशं परशुरामक्षेत्राख्यं जलधौ मग्नं उच्छ्रयतात्, जलादुपरि उन्नमय्य स्थापयतु । प्रार्थनशैलीयम् । 'उत्तिष्ठ नरसिंह संहरसंहर' इत्यादिवत् । क्षेत्रमुद्दीधर इत्यर्थः । अथास्य मध्यमार्यावर्तः एजतु, भवताऽधिगतास्त्रविद्यैः भीष्मादिभिः कम्पितो बभूव । अस्येतिहासस्य चक्रवत् परिवर्तनशीलत्वात् 'एजतु' इति युक्तम् । 'एजृ कम्पने' । कथं चकम्पे? शीते वाते गङ्गायामवगाहनेनाऽत्मानं पुनन् यथा गडगडेति कम्पते तथा ॥ ६ ॥

अथ रामावतारमाह–

**यदस्या अꣳहुभेद्याः कृधु स्थूलमुपातसत् ।**
**मुष्काविदस्या एजतो गोशफे शकुलाविव ॥ ७ ॥**

यं वायुतत्वं हनुमदाख्यं तनोति विस्तारयति कीर्तिदानेनेति यत् रामाख्यं परं ब्रह्म, अस्या निरसनीयायाः, अंहन्त इत्यंहवो ज्ञानशीलाः । अहि गतौ । तेषां



भेदिकायाः, हिंसकत्वात्, रावणसेनायाः यत् कृधु अल्पं दण्डकारण्यगतं रक्षोवृन्दम्, यत् स्थूलं पृथुलं लङ्कागतं तत् सर्वमुपातसत् नाशयामास । तसु उपक्षये लुङ् । अस्याः सेनाया मुष्काविव, मुष्णीतः शत्रुवीर्यमिति मुष्कौ, पुरुषशरीरे मुष्काविव सेनासारभूतौ वीर्यवन्तौ रावणकुम्भकर्णौ रामं प्राप्य एजत एव भयेन । कथम् ? गोशफे लग्नौ, पदाघातेन भग्नौ शकुलौ क्षुद्र-मीनाविवेति ॥ ७ ॥

अथ कृष्णावतारमाह–

**यद्देवासो ललामगुं प्रविष्टीमिनमाविषुः ।**
**सक्थ्ना देदिश्यते नारी सत्यस्याक्षिभुवो यथा ॥ ८ ॥**

देवासः अग्निपुत्राः ललामगुं कृष्णं आविषुः प्राप्तस्त्रीत्वाः पत्नीभावेन जग्मुः । अव गतौ प्राप्तौ इत्यादि हि पठन्ति । ललामेति सुखनाम । पत्नीभावं गतानां देवतानां नरकान्मोचनेन स्वयमूढ्वा च ललाम सुखं गमयतीति ललामगुः । भूमाववतारेण सर्वेषामपि सुखं गमयामासेति वा । कृष्णशब्दार्थोऽयम् । 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः' इति स्मरणात् । गोर्भूमेः ललाम सुखं येनेति वा । ललाटे ललाम कस्तूरीतिलकमयं पुण्ड्रं गच्छतीति वा । ललामभूताः प्रीतिविषया गावोऽस्येति वा गोपबालो गोपालो ललाम-गुरुच्यते । कीदृशं ललामगुम्? प्रविष्टीमिनम् । ष्टीम आर्द्रीभावे । प्रकृष्टानां विशिष्टानां च भक्तिवशतया करुणारसार्द्रम् । सदा भगवति प्रविष्टा ईः श्रीश्च भूश्च । रुग्मिणीसत्यभामे । पूर्वरूपे प्रविष्टीः । तां प्रतीनं मुख्यस्वामिनम् । तया मीयत इति वा प्रविष्टीमी । सत्सु स्नेहक्लिन्नमिति वा । एवं नारीप्रियोऽसौ भगवान् बालत्वे पुनर्नारीं जघानेत्याह– सक्थ्ना । नारी कृष्णाय दत्तस्तना पूतना केवलं यातनाकम्पितेन सक्थ्ना देदिश्यते अहो सम्प्रतीयं मृत्युवेदनामनुभवतीति । अथच नारी गोपकुमारी कात्यायनीव्रतपरा कृष्णेन हृतवासा नग्नेन सक्थ्ना देदिश्यते निरदिश्यत । अथ च स्वपक्षे नरसमुदायवान् एकादशा-

क्षोहिणीपतिर्दुर्योधनः नारीत्युच्यते । सोऽपि भीमाविष्टेनानेनैव भग्नेन सक्थ्नाऽदेदिश्यत। तदात्वे भूमौ गतानां मनुष्यादीनां न केवलम्, गवादीनामपि अक्षिभुवः अक्षिगोचरस्य सत्यस्य निर्दुःखनित्यनिरतिशयानन्दानुभववतः कृष्णस्य दर्शनं साक्षात्कृतस्य परब्रह्मणो दर्शनं यथा ॥ ८ ॥

अथ बुद्धावतारमाह–

**यद्धरिणो यवमत्ति न पुष्टं पशु मन्यते।**
**शूद्रा यदर्यजारा न पोषाय धनायति ॥ ९ ॥**

अहिंसाबोधनेन हरत्यसुराणां मन इति हरिणो बुद्धः। त्रिपुरनारीणां मनो हरतीति वा । तमोगानां सात्विकैः सह यवं मिश्रणम्, मिश्रीभूय च तेषां वेदमार्गे प्रवर्तनमत्ति नाशयति। तथाऽपि पशु वेदवाङ्मयं सर्वात्मना पुष्टं न मन्यते। पान्ति शंसाधनाश्चेति वेदाः पशवः। समुदायैकवचनम्। सामान्ये नपुंसकं च। वर्णतः शूद्रा स्त्री यदा अर्यस्य स्वस्वामिनः उत्तमवर्णस्य जारा बभूव । 'अर्यः स्वामिवैश्ययोः' । वयः कामं च जरयति श्लथयतीति जारा भगदानेन परेषां भाग्यहारिणी बभूव। तदिदं वर्णसाङ्कर्यं असुराणां न पोषाय कल्किरूपेण नाशाय धनायति इच्छति। 'अशनायोदन्याधनायाबुभुक्षापिपासागर्धेषु' (अ.सू. ७.४.३४)इति इच्छार्थे धनायेत्यात्वं निपातितम् ॥ ९ ॥

अथ कल्क्यवतारमाह–

**यद्धरिणो यवमत्ति न पुष्टं बहु मन्यते।**
**शूद्रो यदर्यायै जारो न पोषमनुमन्यते ॥ १० ॥**

हरति दुष्टान् युगान्ते करवालेनेति हरिणः कल्की। यवम्, अधर्ममिश्रं धर्मम्, धर्मोपममधर्मम्, यमुपधर्ममाहुः, यल्लोके अनधिगतबुद्धभावैर्बौद्धैः प्रवर्तितम्, तदत्ति नाशयति। पुष्टं दुष्टकुलं न बहु मन्यते। लीलया शिरांसि कृन्तन् न तृणायापि मन्यते। तदा कलिमहिम्ना शूद्रवर्णोऽपि अर्यायै उत्तमकुलजायै स्वामिन्यै



जारो भवति। एष वा तामिच्छेत्। सा वैतम्। तमेतं जनसङ्कचापोषं नानुमन्यते कल्की । किन्तु भुवो भारं मन्यते । अतः सञ्जहार । अपिच शूद्र इत्यनधिकारित्वस्योपलक्षणम्। म्लेच्छादिः अनधिकारी जनः यदर्यायै, षष्ठ्यर्थे चतुर्थी, 'वीणायै वाद्यमानायै' इति यथा, अर्यायाः सात्विकजनपद्याया वेदविद्याया अध्ययनादिना दूषकः सन् जारो बभूव, तत् वेदविद्यापोषं अयोग्येषु विस्तरणं नानुमन्यते कल्की। तेन बलात्कृतेन व्यभिचारेण पतितामिव मन्यते। पतिरहितामिव मन्यते। अरक्षितामिव मन्यते। अतस्तस्या रक्षायै तानपथे पतितान् पातयामासेति भावः ॥ १० ॥

आसां कण्डिकानां यथाकथाचाश्लीलभाषणपरतामस्फुटामपि व्याकुर्वन्ति याज्ञिकाः । व्याकुर्वन्तु नाम । नास्माकं तत्र भरः । वयन्तु गुह्यभाषामयीं भगवत्परतामन्वेष्टुं कृतभराः। इयानत्र भेदः– वयं तु भगवत्पराः। ते तु भगपरा इति। भगवानेव हि भगोऽपि नाम। 'षण्णां भग इतीरणा' इति स्मृतेः। ये तु पुनरश्लीलभाषणपरतायां कुतूहलिनः, तैरुवटमहीधरादिभिर्विरचितं व्याख्यानमवलोकनीयं भवति । नास्माभिः पुनरपि जग्धतृणरोमन्थः क्रियत इत्यलम् ॥ * ॥

**इमानाचार्यगोविन्दो विनेयजनवाञ्छया।**
**अश्लीलभाषणान् मन्त्रान् व्याचक्रे भगवत्परान् ॥**

**शाब्दो हि भगभक्तानां बोधोऽन्यादृश एव च।**
**अन्यादृशश्च भगवद्भक्तानामिति दर्शितम् ॥**

**इत्याचार्यगोविन्दस्य कृतिषु अश्लीलभाणमन्त्रभाष्यं समाप्तम् ॥**

—०—

# ओषधिसूक्ते घनान्तपाठक्रमः

**संहितापाठः**

**ओषधयस्संवदन्तेसोमेनसहराज्ञा ।**

**यस्मैकृणोतिब्राह्मणस्तंराजन्पारयामसि ।।**

**अथ पदपाठः**

**ओषधयः । सम् । वदन्ते । सोमेन । सह । राज्ञा ।**

१ २ ३ ४ ५ ६

**यस्मै । कृणोति । ब्राह्मणः । तम् । राजन् । पारयामसि ।।**

७ ८ ९ १० ११ १२

[द्वात्रिंशदक्षराणि । द्वादश पदानि ।]

**अथ क्रमपाठः**

ओषधयस्सम् । संवदन्ते । वदन्तेसोमेन । सोमेनसह । सहराज्ञा । राज्ञेतिराज्ञा ।। यस्मैकृणोति । कृणोतिब्राह्मणः । ब्राह्मणस्तम् । तंराजन् । राजन्पारयामसि । पारयामसीतिपारयामसि ।।

## अथ पञ्चसन्धिक्रमपाठः

अनुक्रमश्चोत्क्रमश्च व्युत्क्रमोऽभिक्रमस्तथा।
सङ्क्रमश्चेति पञ्चैते पञ्चसन्धिक्रमः स्मृतः॥

तद् यथा–

यथाक्रमं पदद्वयपाठः अनुक्रमः। उत्तरपदस्य पुनःपाठः उत्क्रमः। पूर्वापरयोः पदयोर्व्यत्यस्य पाठः व्युत्क्रमः। पूर्वपदस्य पुनःपाठः अभिक्रमः। पुनर्यथाक्रमं पदद्वयपाठः सङ्क्रमः। स यथा–

| | | | | |
|---|---|---|---|---|
| १. | (अनुक्रमः) | ओषधयस्सम्। | ४. | सोमेनसह। |
| | (उत्क्रमः) | संसम्। | | सहसह। |
| | (व्युत्क्रमः) | समोषधयः। | | सोहसोमेन। |
| | (अभिक्रमः) | ओषधयओषधयः। | | सोमेनसोमेन। |
| | (सङ्क्रमः) | ओषधयस्सम्। | | सोमेनसह। |
| २. | (अनुक्रमः) | संवदन्ते। | ५. | सहराज्ञा। |
| | (उत्क्रमः) | वदन्तेवदन्ते। | | राज्ञाराज्ञा। |
| | (व्युत्क्रमः) | वदन्तेसम्। | | राज्ञासह। |
| | (अभिक्रमः) | संसम्। | | सहसह। |
| | (सङ्क्रमः) | संवदन्ते। | | सहराज्ञा |
| | | | | (पूर्वार्धोपसंहारः) राज्ञेतिराज्ञा। |
| ३. | (अनुक्रमः) | वदन्तेसोमेन। | ६. | यस्मैकृणोति। |
| | (उत्क्रमः) | सोमेनसोमेन। | | कृणोतिकृणोति। |
| | (व्युत्क्रमः) | सोमेनवदन्ते। | | कृणोतियस्मै। |
| | (अभिक्रमः) | वदन्तेवदन्ते। | | यस्मैयस्मै। |
| | (सङ्क्रमः) | वदन्तेसोमेन। | | यस्मैकृणोति। |



| | | | | |
|---|---|---|---|---|
| ७. | (अनुक्रमः) | कृणोतिब्राह्मणः। | ८. | ब्राह्मणस्तम्। |
| | (उत्क्रमः) | ब्राह्मणोब्राह्मणः। | | तन्तम्। |
| | (व्युत्क्रमः) | ब्राह्मणऽकृणोति। | | तम्ब्राह्मणः। |
| | (अभिक्रमः) | कृणोतिकृणोति। | | ब्राह्मणोब्राह्मणः। |
| | (सङ्क्रमः) | कृणोतिब्राह्मणः। | | ब्राह्मणस्तम्। |
| ९. | (अनुक्रमः) | तंराजन्। | १०. | राजन्पारयामसि। |
| | (उत्क्रमः) | राजन्राजन्। | | पारयामसिपारयामसि। |
| | (व्युत्क्रमः) | राजंस्तम् | | पारयामसिराजन्। |
| | (अभिक्रमः) | तन्तम्। | | राजन्राजन्। |
| | (सङ्क्रमः) | तंराजन्। | | राजम्पारयाससि। |
| | | | | (उत्तरार्धोपसंहारः) पारयामसीतिपारयामसि॥ |

## अथाष्टौ विकृतयः

**ताश्चोक्ताः प्रतनैः–**

‘जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः।
‘अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः’ इति।

‘जटादिविकृतीनां ये पारायणपरा नराः।
‘महात्मानो द्विजश्रेष्ठास्ते ज्ञेयाः पङ्क्तिपावनाः’ इति।

‘क्रमाध्ययनसम्पन्नो मन्त्रब्राह्मणपारगः।
‘जटापारायणपरो विष्णुलोके महीयते॥

‘जटापाठधरं विप्रं यो गर्हयति मूढधीः।
‘पुनरावृत्तिरहितं तमः प्राप्नोति नान्यथा’ इति।

'वेदवेदार्थतत्वज्ञा जटाक्रमविशारदाः।
'श्रोत्रिया ब्राह्मणाः श्राद्धे ये नराः पङ्क्तिपावनाः' इति।

'संहितावित् स्वर्गगामी पदवेदी महर्गतिः।
'क्रमी जनस्तपस्सत्यगामी वैकुण्ठभाग् जटी' इत्यादि च।

## अथ जटापाठः

'अनुलोमविलोमानां त्रिवारं हि पठेत् क्रमम्।
'विलोमे पदवित् सन्धिरनुलोमे यथाक्रमम्' ॥

यथा स्त्रीणां जटा निबद्ध्यते तथा पठनीयमित्यर्थः। तद् यथा–

**ॐ ओषधयस्समसमोषधयओषधयस्सम् ॥ संवदन्तेवदन्तेसंसंवदन्ते ॥ वदन्ते सोमेनसोमेनवदन्तेवदन्तेसोमेन ॥ सोमेनसहसहसोमेनसोमेनसह ॥ सहराज्ञा-राज्ञासहसहराज्ञा ॥ राज्ञेतिराज्ञा ॥**

**यस्मैकृणोतिकृणोतियस्मैयस्मैकृणोति ॥ कृणोतिब्राह्मणोब्राह्मणऽकृणोतिकृणोति-ब्राह्मणः ॥ ब्राह्मणस्तन्तम्ब्राह्मणोब्राह्मणस्तम् ॥ तंराजन्राजंस्तन्तंराजन् ॥ राजन्पारयासिपारयामसिराजन्राजन्पारयामसि ॥ पारयासीतिपारयामासि ॥**

## २. अथ मालापाठः

मालापाठो द्विविधो भवति। क्रममालापाठः पुष्पमालापाठ इति। तत्र क्रममालालक्षणमाचक्षते–

'ब्रूयात् क्रमविपर्यासमर्धर्चस्याऽदितोऽन्ततः।
'अन्तं चाऽदिं नयेदेवं क्रममालेति गीयते' इति।

१. क्रममालापाठो यथा–

| | | | |
|---|---|---|---|
| **ॐ॥ ओषधयस्सम्।** | (१) | (२) | **राज्ञेतिराज्ञा।** |
| **संवदन्ते।** | (३) | (४) | **राज्ञासह।** |



| | | | |
|---|---|---|---|
| **वदन्तेसोमेन।** | (५) | (६) | **सहसोमेन।** |
| **सोमेनसह।** | (७) | (८) | **सोमेनवदन्ते।** |
| **सहराज्ञा।** | (९) | (१०) | **वदन्तेसम्।** |
| **राज्ञेतिराज्ञा।** | (११) | (१२) | **समोषधयः।** |
| **यस्मैकृणोति।** | (१३) | (१४) | **पारयामसीतिपारयामासि॥** |
| **कृणोतिब्राह्मणः।** | (१५) | (१६) | **पारयामसिराजन्।** |
| **ब्राह्मणस्तम्।** | (१०) | (१८) | **राजंस्तम्।** |
| **तंराजन्।** | (१९) | (२०) | **तम्ब्राह्मणः।** |
| **राजन्पारयामसि।** | (२१) | (२२) | **ब्राह्मणःकृणोति।** |
| **पारयामसीतिपारयामासि।** | (२३) | (२४) | **कृणोतियस्मै।** |

***

अथ पुष्पमालालक्षणमाचक्षते–

'माला मालेव पुष्पाणां पदानां ग्रन्थिनी हि सा।
'आवर्तन्ते त्रयस्तस्यां क्रमव्युत्क्रमसङ्क्रमाः' इति।

| | (क्रमः) | (व्युत्क्रमः) | (सङ्क्रमः) |
|---|---|---|---|
| १. | **ॐ ओषधयस्सम्।** | **समोषधयः।** | **ओषधयस्सम्।** |
| २. | **संवदन्ते।** | **वदन्तेसम्।** | **संवदन्ते।** |
| ३. | **वदन्तेसोमेन।** | **सोमेनवदन्ते।** | **वदन्तेसोमेन।** |
| ४. | **सोमेनसह।** | **सहसोमेन।** | **सोमेनसह।** |
| ५. | **सहराज्ञा।** | **राज्ञासह।** | **सहराज्ञा।** |
| ६. | **राज्ञेतीराज्ञा॥** | | |

७. यस्मैकृणोति । कृणोतियस्मै । यस्मैकृणोति ।

८. कृणोतिंब्राह्मणः । ब्राह्मणःकृणोति । कृणोतिंब्राह्मणः ।

९. ब्राह्मणस्तम् । तम्ब्राह्मणः । ब्राह्मणस्तम् ।

१०. तंराजन् । राजंस्तम् । तंराजन् ।

११. राजन्पारयामसि । पारयामसिराजन् । राजन्पारयामसि ।

१२. पारयामसीति पारयामसि ॥

अत्र केचित् प्रत्यावर्तनमितिकरणमुशन्ति । तद् यथा–

'**ओषधयस्सम् ।समोषधयः । ओषधयस्सम् । इति**' इति ।

एवं पदसन्धिष्विपीतिकरणमेके मन्यन्ते । तद् यथा–

१) **समोषुधयइतिसम्+ओषधयः ।**

२) **ब्राह्मणस्तमितिंब्राह्मणः+तम् ।**

३) **राजंस्तमितिराजन्+तम् ।**

***

## ३. अथ शिखापाठः

शिखालक्षणमाचक्षते–

'पदोत्तरां जटामेव शिखामार्याः प्रचक्षते' इति।

तद् यथा–

**ॐओषधयस्संसमोषधयओषधयस्संवदन्ते ।**

**संवदन्तेवदन्तेसंसंवदन्तेसोमेन ।**

**वदन्तेसोमेनसोमेनवदन्तेवदन्तेसोमेनसह ।**

**सोमेनसहसहसोमेनसोमेनसह राज्ञा ।**



**सहराज्ञा राज्ञासह सहराज्ञा ।**

**राज्ञेतिराज्ञा ॥**

**यस्मैकृणोति कृणोतियस्मैयस्मैकृणोतिंब्राह्मणः ।**

**कृणोतिंब्राह्मणोब्राह्मणःकृणोतिकृणोतिंब्राह्मणस्तम् ।**

**ब्राह्मणस्तन्तम्ब्राह्मणोब्राह्मणस्तं राजन् ।**

**तंराजन् राजंस्तंतंराजन्पारयामसि ।**

**राजन्पारयामसिपारयामसिराजन्राजन्पारयामसि ।**

**पारयामसीति पारयामसि ॥**

***

## ४. अथ रेखापाठः

रेखालक्षणमाचक्षते–

'क्रमाद् द्वित्रिचतुष्पञ्चपदक्रममुदाहरेत् ।
'पृथक्पृथग् विपर्यस्य रेखामाहुः पुनः क्रमात्' इति ।

तद् यथा–

**पदद्वयम्=** ओषधयः सम् । समोषधयः । ओषधयस्सम् ।

**पदत्रयम्=**सं वदन्ते सोमेन । सोमेन वदन्ते सम् । सं वदन्ते ॥

**पदचतुष्कम्**=वदन्तेसोमेन सह राज्ञा । राज्ञा सह सोमेन वदन्ते । वदन्ते सोमेन ॥
सोमेन सह । सहराज्ञा । राज्ञेतिराज्ञा ।

**पदद्वयम्=** यस्मैकृणोति । कृणोतियस्मै । यस्मैकृणोति ।

**पदत्रयम्=**कृणोति ब्राह्मणस्तम् । तं ब्राह्मणः कृणोति । कृणोति ब्राह्मणः ।

**पदचतुष्कम्=** ब्राह्मणस्तं राजन् पारयामसि । पारयामसि राजंस्तं ब्राह्मणः ।
ब्राह्मणस्तम् ।
तं राजन् । राजन्पारयामसि । पारयामोसीति पारयामसि ॥

समग्रमन्त्रस्य यथा–

२= ओषधयः सम् । समोषधयः । ओषधयः सम् ॥

३= सं वदन्ते सोमेन । सोमेन वदन्ते सम् । सं वदन्ते ॥

४= वदन्ते सोमेन सह राज्ञा । राज्ञा सह सोमेन वदन्ते । वदन्ते सोमेन ॥

५= सोमेन सह राज्ञा यस्मै कृणोति । कृणोति यस्मै राज्ञा सह सोमेन । सोमेन सह ॥

६= सहराज्ञा यस्मै कृणोति ब्राह्मणस्तम् । तम्ब्राह्मणः कृणोति यस्मै राज्ञा सह । सह राज्ञा ॥

७= राज्ञा यस्मै कृणोति ब्राह्मणस्तं राजन् पारयामसि । पारयामसि राजंस्तं ब्राह्मणः कृणोति यस्मै राज्ञा । राज्ञा यस्मै ॥

यस्मै कृणोति । कृणोति ब्राह्मणः । ब्राह्मणस्तम् । तं राजन् । राजन्पारयामसि । पारयामसीति पारयामसि ॥

***

## ५. अथ ध्वजपाठः

ध्वजपाठलक्षणमाचक्षते–

'ब्रूयादादेः क्रमं सम्यगन्तादुत्तारयेद् यदि ।
'वर्गे वा ऋचि वा यत्र पठनं स ध्वजः स्मृतः' इति ।

स यथा–

| | |
|---|---|
| १. ओषधयः सम् । | २ पारयामसीति पारयामसि । |
| ३. सं वदन्ते । | ४.राजन् पारयामसि । |
| ५. वदन्ते सोमेन । | ६. तं राजन् । |
| ७. सोमेन सह । | ८. ब्राह्मणस्तम् । |
| ९. सह राज्ञा । | १०. कृणोति ब्राह्मणः । |



| | |
|---|---|
| ११. राज्ञेति राज्ञा । | १२. यस्मै कृणोति । |
| १३. यस्मै कृणोति । | १४. राज्ञेति राज्ञा । |
| १५. कृणोति ब्राह्मणः । | १६. सह राज्ञा । |
| १७. ब्राह्मणस्तम् । | १८. सोमेनसह । |
| १९. तंराजन् । | २०. वदन्ते सोमेन । |
| २१. राजन् पारयामसि । | २२. सं वदन्ते । |
| २३. पारयामसीति पारयामसि । | २४. ओषधयः सम् । |

***

## ६. अथ दण्डपाठः

तल्लक्षणमाचक्षते–

'क्रममुक्त्वा विपर्यस्य पुनश्च क्रममुत्तरम् ।
'अर्धर्चादिवमुक्तोऽयं क्रमदण्डोऽभिधीयते' इति ।

स यथा–

२ = ओषधयः सम् । समोषधयः ।

३ = ओषधयः सम् । सं वदन्ते । वदन्ते समोषधयः ।

४ = ओषधयः सम् । सं वदन्ते । वदन्ते सोमेन । सोमेन वदन्ते समोषधयः ।

५ = ओषधयः सम् । सं वदन्ते । वदन्ते सोमेन । सोमेन सह । सह सोमेन वदन्ते समोषधयः ।

६ = ओषधयः सम् । सं वदन्ते । वदन्ते सोमेन । सोमेन सह । सह राज्ञा । राज्ञा सह सोमेन वदन्ते समोषधयः ।

ओषधयः सम् । सं वदन्ते । वदन्ते सोमेन । सोमेन सह । सह राज्ञा । राज्ञेति राज्ञा ॥

उत्तरार्द्धर्चस्य–

२ = यस्मै कृणेति । कृणोति यस्मै ।

३ = यस्मै कृणेति । कृणोति यस्मै । कृणोति ब्राह्मणः । ब्राह्मणः कृणोति यस्मै ।

४ = यस्मै कृणेति । कृणोति यस्मै । ब्राह्मणस्तम् । तं ब्राह्मणः कृणोति यस्मै ।

५ = यस्मै कृणेति । कृणोति ब्राह्मणः । ब्राह्मणस्तम् । तं राजन् । राजंस्तं ब्राह्मणः कृणोति यस्मै ।

६ = यस्मै कृणेति । कृणोति ब्राह्मणः । ब्राह्मणस्तम् । तं राजन् । राजन् पारयामसि । पारयामसि राजंस्तं ब्राह्मणः कृणोति यस्मै ।

यस्मै कृणेति । कृणोति ब्राह्मणः । ब्राह्मणस्तम् । तं राजन् । राजन् पारयामसि । पारयामसीति पारयामसि ॥

***

## ७. अथ रथपाठः

तल्लक्षणमाचक्षते–

'पादशोऽर्धर्चशो वाऽपि सहोक्त्या दण्डवद् रथः' इति ।

(१) तत्र द्विपात् द्विचक्रो वा रथपाठो यथा–

२= ओषधयः सम् । यस्मै कृणेति ।
समोषधयः । कृणोति यस्मै ।

३= ओषधयः सम् । यस्मै कृणेति ।
संवदन्ते । कृणेति ब्राह्मणः ।
वदन्ते समोषधयः । ब्राह्मणऽ कृणोति यस्मै ।

४= ओषधयः सम् । यस्मै कृणेति ।
सं वदन्ते । कृणेति ब्राह्मणः ।



वदन्ते सोमेन । ब्राह्मणस्तम् ।
सोमेन वदन्ते समोषधयः । तं ब्राह्मणः कृणोति यस्मै ।

५ = ओषधयः सम् । यस्मै कृणेति ।
सं वदन्ते । कृणेति ब्राह्मणः ।
वदन्ते सोमेन । ब्राह्मणस्तम् ।
सोमेन सह । तं राजन् ।
सह सोमेह वदन्ते समोषधयः । राजंस्तं ब्राह्मणः कृणोति यस्मै ।

६= ओषधयः सम् । यस्मै कृणेति ।
सं वदन्ते । कृणेति ब्राह्मणः ।
वदन्ते सोमेन । ब्राह्मणस्तम् ।
सोमेन सह । तं राजन् ।
सह राज्ञा । राजन् पारयामसि ।
राज्ञेति राज्ञा । पारयामसीति पारयामसि ॥

(२) त्रिचक्रो रथः त्रिपदायां गायत्र्यां प्रतिपादं समानसङ्ख्यपदकत्व एव भवति । तस्मादन्य एव मन्त्रोऽन्वेष्टव्यः । तथाहि–

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।
इन्द्रस्य युज्यः सखा ॥

ऋच्यस्यां त्रिपात् त्रिचक्रो वा रथो यथा–

विष्णोः कर्माणि । यतो व्रतानि । इन्द्रस्य युज्यः ।
कर्माणि विष्णोः । व्रतानि यतः । युज्य इन्द्रस्य ।

विष्णोःकर्माणि । यतोव्रतानि । इन्द्रस्ययुज्यः ।
कर्माणिपश्यत । व्रतानिपस्पशे । युज्यःसखा
पश्यतकर्माणि विष्णोः । पस्पशे व्रतानि यतः । सखा युज्य इन्द्रस्य ।

विष्णो॒ः कर्मा॑णि । कर्मा॑णि पश्यत । प॒श्यते॒ति॑पश्यत ।
यतो॑ व्र॒तानि॑ । व्र॒तानि॑ पस्प॒शे । प॒स्प॒श इति॑पस्प॒शे ।
इन्द्र॑स्य युज्य॒ः । युज्य॒ः सखा॑ । सखेति॑सखा॑ ।

***

(३) चतुष्पात् चतुश्चक्रो वा रथो यथा–

ओष॑धय॒ः सम् । सोमे॑न स॒ह । यस्मै॑ कृ॒णेति॑ । तं रा॑जन् ।
समोष॑धयः । स॒ह सोमे॑न । कृ॒णोति॒ यस्मै॑ । रा॒ज॒ंस्तम् ।

ओष॑धय॒ः सम् । सोमे॑न स॒ह । यस्मै॑ कृ॒णेति॑ । तं रा॑जन् ।
सं व॑दन्ते । स॒ह राज्ञा॑ । कृ॒णोति॒ ब्रा॒ह्म॒णः । रा॒जन्पा॒र॒या॒म॒सि॒ ।
व॒द॒न्ते समोष॑धयः । राज्ञा॑ स॒ह सोमे॑ह । ब्रा॒ह्म॒णःकृ॒णोति॒यस्मै॑ । पा॒र॒या॒म॒सि॒-रा॒ज॒ंस्तम् ।

ओष॑धय॒ः सम् । सं व॑दन्ते । व॒द॒न्त इति॑ वदन्ते ।
सोमे॑ह स॒ह । स॒ह राज्ञा॑ । राज्ञेति॒ राज्ञा॑ ।
यस्मै कृ॒णोति॑ । कृ॒णोति॑ ब्रा॒ह्म॒णः । ब्रा॒ह्म॒ण इति॑ ब्रा॒ह्म॒णः ।
तंरा॑जन् । रा॒ज॒न्पा॒र॒या॒म॒सि॒ । पा॒र॒या॒म॒सीति॑पारयामसि ॥

***

## ८. घनपाठः

द्विविधो भवति घनपाठः । तत्रैकं लक्षणमाचक्षते–

‘अन्तात् क्रमं पठेत् पूर्वमादिपर्यन्तमानयेत् ।
‘आदिक्रमं नयेदन्तं घनमाहुर्मनीषिणः’ इति ।

(१) स यथा–

राज्ञेति॒राज्ञा॑ । स॒ह राज्ञा॑ । सोमे॑ह स॒ह । व॒द॒न्ते सोमेन । सं व॑दन्ते । ओष॑धयः सम् सं व॑दन्ते॒ । व॒द॒न्ते सोमे॑न । सोमे॑न स॒ह । स॒ह राज्ञा॑ ।राज्ञेति॒राज्ञा ॥



पा॒र॒या॒म॒सीति॑पारयामसि । रा॒ज॒न् पा॒र॒या॒म॒सि॒ । तं रा॑जन् । ब्रा॒ह्म॒णस्तम् । कृ॒णोति॑ ब्रा॒ह्म॒णः । यस्मै कृ॒णोति-कृ॒णोति॑ ब्रा॒ह्म॒णः । ब्रा॒ह्म॒णस्तम् । तं रा॑जन् । रा॒ज॒न् पा॒र॒या॒म॒सि॒ । पा॒र॒या॒म॒सीति॑ पारयामसि ॥

२. द्वितीयं लक्षणमाचक्षते–

‘शिखामुक्त्वा विपर्यस्य तत्पदानि पुनः पठेत् ।
‘अयं घन इति प्रोक्तः–’ इति ।

स यथा–

ओष॑धय॒स्सम् समोष॑धय ओष॑धय॒स्सं व॑दन्ते वदन्ते॒ समोष॑धय॒ ओष॑धय॒ः सं व॑दन्ते ॥

सं व॑दन्ते वदन्ते॒ सम् सं व॑दन्ते॒ सोमे॑न सोमे॑न वदन्ते॒ सम् सं व॑दन्ते॒ सोमे॑न ॥

व॒द॒न्ते॒ सोमे॑न सोमे॑न वदन्ते वदन्ते॒ सोमे॑न स॒ह स॒ह सोमे॑न व॑दन्ते वदन्ते॒ सोमे॑न सह ॥

सोमे॑न स॒ह स॒ह सोमे॑न सोमे॑न स॒ह राज्ञा॑ राज्ञा॑ स॒ह सोमे॑न॒ सोमे॑न स॒ह राज्ञा॑ ॥

स॒ह राज्ञा॑ राज्ञा॑ स॒ह स॒ह राज्ञा॑ ॥ राज्ञेति॒ राज्ञा॑ ॥

यस्मै॑ कृ॒णोति॑ कृ॒णोति॒ यस्मै॒ यस्मै॑ कृ॒णोति॑ ब्रा॒ह्म॒णो ब्रा॑ह्म॒णः कृ॒णोति॒ यस्मै॒ यस्मै॑ कृ॒णोति॑ ब्रा॒ह्म॒णः ॥

कृ॒णोति॑ ब्रा॒ह्म॒णो ब्रा॑ह्म॒णः कृ॒णोति॑ कृ॒णोति॑ ब्रा॒ह्म॒णस्तम् तं ब्रा॑ह्म॒णः कृ॒णोति॑ कृ॒णोति॑ ब्रा॒ह्म॒णस्तम् ॥

ब्रा॒ह्म॒णस्तन् तं ब्रा॑ह्म॒णो ब्रा॑ह्म॒णस्तं रा॑जन् राज॒ंस्तं ब्रा॑ह्म॒णो ब्रा॑ह्म॒णस्तं राजन् ॥

तं रा॑जन् राज॒ंस्तन् तं रा॑जन् पारयामसि पारयामसि राज॒ंस्तन् तं रा॑जन् पारयामसि ॥

रा॒ज॒न् पा॒र॒या॒म॒सि॒ पा॒र॒या॒म॒सि॒ रा॒ज॒न् रा॒ज॒न् पा॒र॒या॒म॒सि॒ ॥ पा॒र॒या॒म॒सीति॑ पारयामसि ॥

***

## अथ पञ्चसन्धियुक्तो घनपाठः

तमेतं घनपाठं घनवल्लभ इत्याचक्षते घनपाठस्यापि वल्लभोऽयं पाठ इति । तथाचायं पाठक्रमः–

(१) ओषधयः सम् । सम् सम् । समोषधयः । ओषधय ओषधयः । ओषधयः सम् ।

ओषधयः सं समोषधय ओषधयः सं वदन्ते वदन्ते समोषधय ओषधयः सं वदन्ते ॥

(२) सं वदन्ते । वदन्तेवदन्ते । वदन्ते सम् । सं सम् । संवदन्ते ।

सं वदन्ते वदन्ते सं सं वदन्ते सोमेन सोमेन वदन्ते सं सं वदन्ते सोमेन ॥

(३) वदन्ते सोमेन । सोमेन सोमेन । सोमेन वदन्ते । वदन्ते वदन्ते वदन्ते सोमेन ।
वदन्ते सोमेन सोमेन वदन्ते वदन्ते सोमेन सह सह सोमेन वदन्ते । वदन्ते सोमेन सह ॥

(४) सोमेन सह । सह सह । सह सोमेन । सोमेन सोमेन । सोमेन सह ।
सोमेन सह सह सोमेन सोमेन सह राज्ञा राज्ञा सह सोमेन सोमेन सह राज्ञा ॥

(५) सह राज्ञा । राज्ञा राज्ञा । राज्ञा सह । सह सह । सह राज्ञा ।
सह राज्ञा राज्ञा सह सह राज्ञा राज्ञेति राज्ञा ॥

(६) यस्मै कृणोति । कृणोति कृणोति । कृणोति यस्मै । यस्मै यस्मै । यस्मै कृणोति ।

यस्मै कृणोति कृणोति यस्मै यस्मै कृणोति ब्राह्मणो ब्राह्मणः कृणोति यस्मै यस्मै कृणोति ब्राह्मणः ।

(७) कृणोति ब्राह्मणः । ब्राह्मणो ब्राह्मणः । ब्राह्मणः कृणोति । कृणोति कृणोति । कृणोति ब्राह्मणः ।



कृणोति ब्राह्मणो ब्राह्मणः कृणोति कृणोति ब्राह्मणस्तन् तं ब्राह्मणः कृणोति कृणोति ब्राह्मणस्तम् ॥

(८) ब्राह्मणस्तम् । तन्तम् । तं ब्राह्मणः । ब्राह्मणो ब्राह्मणः । ब्राह्मणस्तम् ।

ब्राह्मणस्तन्तं ब्राह्मणो ब्राह्मणस्तं राजन् राजंस्तं ब्राह्मणो ब्राह्मणस्तं राजन् ।

(९) तं राजन् । राजन् राजन् । राजंस्तम् । तन्तम् । राजंस्तम् ।
तं राजन् राजंस्तन्तं राजन् पारयामसि पारयामसि राजंस्तन्तं राजन् पारयामसि ।

(१०) राजन् पारयामसि । पारयामसि पारयामसि । पारयामसि राजन् । राजन् राजन् । राजन् पारयामसि ।
राजन् पारयामसि पारयामसि राजन् राजन् पारयामसि पारयामसीति पारयामसि ।

२.घनवल्लभस्य द्वितीयः प्रकारः–यदीदमेव अन्तादादिपर्यन्तमादेरन्तपर्यन्तमावृत्त्या चेत् स द्वितीयो घनवल्लभपाठः ।

***

## अपालासूक्ते घनपाठः

अपालासूक्तेऽपि द्वितीयमन्त्रस्य 'धानावन्तङ्करम्भिणमपूपवन्तमुक्थिनम्' इति चरमं पादद्वयं माध्यन्दिनाः घनपाठे संयुज्य पठन्ति । तद् यथा–

**धानावन्तङ्करम्भिणङ्करम्भिणन्धानावन्तन्धानावन्तङ्करम्भिणमपूपवन्त-मपूपवन्तङ्करम्भिणन्धानावन्तन्धानावन्तङ्करम्भिणमपूपवन्तम्।**
**धानावन्तमितिधाना+वन्तम्।**

**करम्भिणमपूपवन्तमपूपवन्तङ्करम्भिणङ्करम्भिणमपूपवन्तमुक्थिनम-पूपवन्तङ्कर- म्भिणङ्करम्भिणमपूपवन्तमुक्थिनम्।**

**अपूपवन्तमुक्थिनमुक्थिनमपूपवन्तमपूपवन्तमुक्थिनम्।**
**अपूपवन्तमित्यपूप+वन्तम्। उक्थिनमित्युक्थिनम्॥**

—०—